ॐ

# श्रीगणेशाय नमः

दयैश्वर्यादिगुणालंकृत श्रीमहार
जाधिराज रणवीरसिंहाज्ञकमध्यगा

कलापवृत्तकेकारकस
मासतद्धितस्त्रीप्रत्ययपा
दमदित मेतद्द्वितीयः २

मतिप्रवीणरायहरसहायवगायसोय
मेनश्रीनगरान्तर्यन्त्रालये यन्त्रितम्

संवत् १९३२

ॐ

# श्रीगणेशाय नमः

॥ अथ नामप्रकरणम् ॥ धातुविभक्तिवर्जमर्थवल्लिङ्गम् ॥ अर्थवत्सार्थकं शब्दस्वरूपं लिङ्गसंज्ञं भवति धातुविभक्तीर्वर्जयित्वा लिङ्गसंज्ञायाः प्रयोजनम् लिङ्गान्तनकारस्येत्यादिषु ज्ञेयम् तस्मात्परा विभक्तयः ॥ तस्माल्लिङ्गात्परः स्यादयः सप्तविभक्तयो भवन्ति सि औ जस् इति प्रथमा अम् औ शस् इति द्वितीया टा भ्याम् भिस् इति तृतीया ङे भ्याम् भ्यस् इति चतुर्थी ङसि भ्याम् भ्यस् इति पञ्चमी ङस् ओस् आम् इति षष्ठी ङि ओस् सुप् इति सप्तमी आमन्त्रणे प्रथमैवाष्टमी वृक्षः वृक्षौ वृक्षाः वृक्षम् वृक्षौ वृक्षान्

हलेन हलाभ्याम् हलैः हलाय हलाभ्याम् हलेभ्यः हलात् हलाभ्यां हलेभ्यः हलस्य हलयोः हलानाम् हले हलयोः हलेषु आमन्त्रणे हे हल हे हलौ हे हलाः पञ्चादौ घुट् स्यादीनामादौ पञ्च वचनान्यासे घुट्संज्ञाभवन्ति घुट् ५ सि औ जस् अम् औ घुट्संज्ञयाः प्रयोजनम् घुटि चासम्बुद्धावित्यादिषु राजा राजानौ राजानः राजानम् राजानौ जस्शसौ नपुंसके नपुंसकलिङ्गे जस् शस् इत्येतौ प्रत्ययौ घुट्संज्ञौ भवतः घुट् २ जस् शस् घुट्संज्ञयाः प्रयोजनम् घुटि चासम्बुद्धावित्यादिषु सामानि रूपाणि सामानि पश्यति आमन्त्रिते सिः सम्बुद्धिः आमन्त्रितजाद्धा नमामन्त्रितेर्थे यः सिप्रत्ययः स सम्बुद्धिसंज्ञो भवति सम्बुद्धिसंज्ञया क प्रयोजनम् सम्बुद्धौ चे । त्यादिषु हे राजन् हे यज्वन् आगम उदनुबन्धः स्वरादन्त्यात्परः उदनुबन्धः उकारानुबन्धः य आगमः सः अन्त्यात्स्वरात्परो भवति अनड्वान्

तृतीयादौ तु परादिः तृतीयादौ विभक्तिगणे परे उदनुबन्ध उकारानुबन्ध आगमः परस्य प्रत्ययस्यादिरवयवो भवति सर्वेषाम् // इदुदग्निः इकारान्तः शब्दः उकारान्तः शब्दः अग्निसंज्ञो भवति अग्निसंज्ञयाः प्रयोजनम् अग्नेरमोकारः इत्यादिषु अग्निम् पटुम् बुद्धिम् धेनुम् ईदूतस्त्र्या

**ख्यौ नदी** ईकारान्तः शब्दः ऊकारान्तः शब्दः स्त्र्याख्यौ स्त्रीवाचकौ नदीसंज्ञौ भवतः नदीसंज्ञायाः कः प्रयोजनम् नद्याः ऐ आसासामित्यादिषु नद्यै नद्याः नद्याः नद्याम् वध्वै वध्वाः वध्वाः वध्वाम्

**आप् श्रद्धा** आकारान्तः शब्दः स्त्र्याख्यः स्त्रीवाचकः श्रद्धासंज्ञो भवति श्रद्धासंज्ञायाः कः प्रयोजनम् श्रद्धायाः स्त्रिलोपमित्यादिषु गङ्गा या सा का

**अन्त्यात्पूर्व उपधा** अन्त्याद्वर्णात्पूर्वो वर्ण उपधासंज्ञो भवति उपधासंज्ञायाः कः प्रयोजनम् नान्तस्य चोपधाया इत्यादिषु पञ्चानाम् सप्तानाम् दशानाम्

**व्यञ्जनान्तोऽपदः** अन्त्याद्व्यञ्जनात्पूर्वो नकारः अपदसंज्ञो भवति अपदसंज्ञायाः कः प्रयोजनम् अपदस्याञ्चन्वेरित्यादिषु विदुषः महतः

**स्पृष्टं व्यञ्जनमननन्तस्थानुनासिकम्** व्यञ्जनं स्पृष्टसंज्ञं भवति अनन्तस्थानुनासिकम् अन्तस्थानुनासिकान्वर्जयित्वा ह्रह् खघ कखगघ चछजझ टठडढ तथदध पफबभ शषसह स्पृष्टसंज्ञायाः कः प्रयोजनम् स्पृष्टान्तनीय इत्यादिषु अग्निमद्भ्याम् वीरुद्भिः

**अकारो दीर्घं घोषवति** अकारो लिङ्गान्तः दीर्घमाप्नोति घोषवदादौ विभक्तौ परतः वृक्षाय देवाभ्याम्। **जसि** अकारो लिङ्गान्तो दीर्घमाप्नोति जसि परे वृक्षाः देवाः **शसि**

सम्प्रथमः अकारोलिङ्गान्तोदीर्घं प्राप्नोति प्रा
त्रिपरे प्रासश्चसकारस्यनत्वंभवति वृत्तान् देवान्
अकारेलोपम् अकारोलिङ्गान्तः लोपं
प्राप्नोति विभक्तिसम्बन्धिन्यकारे परे वृत्तम् देव
म् भिसेस्त्रा अकारान्ताल्लिङ्गात्परो भिस्
ऐस् संपद्यते वृत्तैः देवैः सुपिवहुत्वेत्वे
अकारोलिङ्गान्तः एकारोभवति वहुत्वे उत्पन्ने
सुदिपरे वृत्तेभ्यः देवेषु ओसिच अकारो
लिङ्गान्तः एकारो भवति ओसिपरे वृत्तयोः देवयोः
ङसिरात् अकारान्ताल्लिङ्गात्परोङसिप्र
त्ययः आत्संपद्यते वृत्तात् देवात् ङस्स्य
अकारान्ता ल्लिङ्गात्परो ङस्प्रत्ययः स्य संपद्यते वृ
त्तस्य देवस्य इनटा अकारान्ताल्लिङ्गा त्परः
टाप्रत्ययः इनादेशंप्राप्नोति वृत्तेन देवेन ङेर्यः
अकारान्ताल्लिङ्गा त्परः ङेप्रत्ययः यआदेशंप्रा
प्नोति वृत्ताय देवाय स्मैसर्वनाम्नः अका
रान्तात्सर्वनाम्नः परोङे प्रत्ययः स्मै संपद्यते सर्व
स्मै विश्वस्मै यस्मै तस्मै कस्मै अमुष्मै अस्मै सर्व
विश्व उभ उभय डतर डतम अन्य अन्यतर त्वत् त्व
नेम सम सिम पूर्व पर अवर दक्षिण उत्तर अपर
अधर स्व अन्तर त्यद् तद् यद् एतद् अदस् इदम्
एक द्वि युष्मद् अस्मद् भवत् किम् एतेसर्वाद
यः ङसिस्मात् अकारान्तात्सर्वनाम्नः प।

रो ङसिप्रत्ययः स्मात्संपद्यते सर्वस्मात् विश्वस्मात्
यस्मात् तस्मात् कस्मात् अमुष्मात् अस्मात्
**ङेः स्मिन्** अकारान्तात्सर्वनाम्नः परो ङिप्रत्य
यः स्मिन्संपद्यते सर्वस्मिन् विश्वस्मिन् यस्मिन् त
स्मिन् कस्मिन् अमुष्मिन् अस्मिन् **विभाष्ये
ते पूर्वादेः** पूर्वादेर्गणात्परयोः ङसिङ्योः स्मा
त्स्मिन्नादेशौ विभाष्येते विकल्पेन कथ्येते पूर्वस्मा
त् वा पूर्वात् पूर्वस्मिन् वा पूर्वे परस्मात् वा परात्
परस्मिन् वा परे **सुडामि सर्वतः** सर्वतः स
र्वस्मा दकारान्ता दाकारान्ताच्च सर्वनाम्नः आमि परे
सुडागमो भवति सर्वेषाम् येषाम् तेषाम् केषाम्
अमीषाम् एषाम् सर्वासाम् यासाम् तासाम् कासा
म् अमूषाम् आसाम् **जस्सर्वेईम्** अकारान्ता
त्सर्वनाम्नः परः सर्वो जस् ईत्वमाप्नोति सर्वे ये ते के
अमी इमे **अल्पादेर्वा** अल्पादेर्गणात्परो जस्
ईत्वं वाप्नोति अल्पे वा अल्पाः प्रथमे वा प्रथमाः
चरमे वा चरमाः अल्प प्रथम चरम तय अर्ध कति
पय नेम इत्यल्पादिगणः **पूर्वादेश्च** पूर्वादेर्ग
णात्परो जस् वा ईत्वमाप्नोति पूर्वे वा पूर्वाः परे वाप
राः **द्वन्द्वस्थाच्च** द्वन्द्वसमासस्थात्सर्वनाम्नः प
रो जस् वा ईत्वं आप्नोति कतरे च कतमे च ते
कतरकतमे वा कतरकतमाः दन्तुकतर कतमे वा
दन्तकतर कतमाः **नाम्न्यसार्वनामिकम्**

द्वन्द्वसमासस्थात्सर्वनाम्नः परस्य प्रत्ययस्यात्सार्व
नामिकं कार्यं न भवति पूर्वे चापरे च तत्पूर्वापरम् त
स्मै पूर्वापराय पूर्वापरान् पूर्वापराणाम् पूर्वापरे

**तृतीयासमासे** तृतीयासमासे सति सर्व
नाम्नः परस्य प्रत्ययस्य सार्वनामिकं कार्यं न भवति मा
सेन पूर्वः मासपूर्वः तस्मै मासपूर्वाय मासपूर्वान्
मासपूर्वाणाम् मासपूर्वे **बहुव्रीहौ च** ब
हुव्रीहौ समासे सति सर्वनाम्नः परस्य प्रत्ययस्य सा
र्वनामिकं कार्यं न भवति प्रियाः सर्वे यस्य सः प्रियसर्व
स्तस्मै प्रियसर्वाय प्रियसर्वान् प्रियसर्वाणाम् प्रि
यसर्वे **दिशां वा** दिशां दिग्वाचिनां शब्दानां यो ब
हुव्रीहिस्तत्रस्थितात्सर्वनाम्नः परस्य प्रत्ययस्य सार्व
नामिकं कार्यं वा भवति दक्षिणस्याश्च पूर्वस्याश्च दि
शोर्यदन्तरालं विदिक्सा दक्षिणपूर्वा तस्यै दक्षि
णपूर्वस्यै वा दक्षिणपूर्वायै दक्षिण ॥ पूर्व
स्या वा दक्षिणपूर्वायाः दक्षिणपूर्वस्याश्च दक्षिणपू
र्वायाः दक्षिणपूर्वस्यां वा दक्षिणपूर्वायाम् अ
**द्व्यः सिलोपम्** अद्वासंज्ञकात्परः सि प्रत्य
यो लोपं प्राप्नोति गङ्गा या सा का **टौसोरे** अद्वा
याश्चान्तस्य एत्वं भवति टाओस् इत्येतयोः परयोः ग
ङ्गया गङ्गयोः उभया उभयोः **सम्बुद्धौ च** अ
द्वयाश्चान्तस्य एत्वं भवति सम्बुद्धौ परस्याम् हे गङ्गे हे
उभये **स्त्र्यर्थानाम्** स्त्र्यर्थायेमात्

वाचकाः श्रद्धासंज्ञकाः याङ्गास्तेषां ह्रस्वोभवति सम्बुद्धौ
परस्याम् हे अम्ब हे अक्क हे अल्ल हे अम्ब **औरीम्**
श्रद्धायाः परः औ प्रत्ययः ईत्वं प्राप्नोति माले अत्र माले
आनय **ङवन्तियैयास्यास्याम्** श्रद्धयाः पराणि
ङवन्तिवचनानि ङे ङसि ङस् ङि इत्येतानियथा संख्यं
यैयास् यास् याम् इत्येतानादेशानापद्यन्ते गङ्गायै ग
ङ्गायाः गङ्गायाः गङ्गायाम् उमायै उमायाः उमायाः
उमायाम् **सर्वनाम्नस्स्वं सर्वोह्रस्वपूर्वाः**
सट्सुनामसकारागमेनयुक्ताः ह्रस्वःपूर्वोयेषांते ह्र
स्वपूर्वाः श्रद्धासंज्ञकात्सर्वनाम्नः परेषांङवतां वचना
नां यै यास् यास् याम् एतेआदेशाः ससटः सटाग
मयुक्ताः ह्रस्वपूर्वाश्चभवन्ति सर्वस्यै सर्वस्याः सर्व
स्याः सर्वस्याम् यस्यै यस्याः यस्याः यस्याम् तस्यै तस्या
तस्याः तस्याम् कस्यै कस्याः कस्याः कस्याम् अन्यस्यै
अन्यस्याः अन्यस्याः अन्यस्याम् अस्यै अस्याः अस्याः अ
स्याम् **द्वितीयातृतीयाभ्यांवा** द्वितीयातृती
याभ्यांपरेषां ङवतां वचनानां यै यास् यास्
याम् इत्येतेआदेशाः ससटः सटागमयुक्ताः ह्रस्व
पूर्वाश्चवाभवंति द्वितीयस्यैवा द्वितीयायै द्वितीय
स्याःवा द्वितीयायाः द्वितीयस्याःवा द्वितीयाया द्वि
तीयस्यांवा द्वितीयायाम् एवंहि तृतीयस्यैवा तृती
यायै तृतीयस्याःवा तृतीयायाः तृतीयस्याःवा तृ
तीयायाः तृतीयस्यांवा तृतीयायाम् **नद्याटे**

आसासाम् नदीसंज्ञकाल्लिङ्गात्परेषांङवचनानां
ङे आस् आस् आस् इत्येते आदेशाभवन्ति नद्यै न
द्याः नद्याः नद्याम् वध्वै वध्वाः वध्वाः वध्वाम् सं
बुद्धौह्रस्वः नदीसंज्ञकाल्लिङ्गादन्यस्य ह्रस्वोभ
वति संबुद्धौपरस्याम् हेनदि हेवधु अम्शसो
रादेर्लोपम् नदीसंज्ञकाल्लिङ्गात्परयोरम्शस
रित्येतयोः प्रत्यययोरादेरकारोलोपंप्राप्नोति नदी
म् नदीः वधूम् वधूः ईकारान्तात्सेः ईका
रान्तान्नदीसंज्ञकाल्लिङ्गात्परः सिप्रत्ययोलोपंप्राप्नोति
नदी मही गौरी व्यञ्जनाच्च व्यञ्जनान्ता
ल्लिङ्गात्परः सि प्रत्ययोलोपंप्राप्नोति वाक् विद्युत्
राजा अग्नेरमोकारः अग्निसंज्ञकाल्लिङ्गा
त्परस्यामः अकारोलोपंप्राप्नोति अग्निम् पटुम् बु
द्धिम् धेनुम् औकारःपूर्वम् अग्निसंज्ञका
ल्लिङ्गात्परः औकारः पूर्ववर्णंप्राप्नोति अग्नी पटू बु
द्धी धेनू शसोकारःसश्चनोस्त्रियाम्
अग्निसंज्ञकाल्लिङ्गात्परस्य शसः अकारः पूर्ववर्णं
प्राप्नोति शसश्चसकारस्यनत्वंभवति अस्त्रियांस्त्री
विषयंवर्जयित्वा अग्नीन् पटून् अस्त्रियामितिकि
म् बुद्धीः धेनूः टाना अग्निसंज्ञकाल्लिङ्गात्परो
टाप्रत्ययः ना आदेशं प्राप्नोति अस्त्रियांस्त्रीविषयंव
र्जयित्वा अग्निना पटुना अस्त्रियामितिकिम् बुद्ध्या

धेन्वा ॥ अदोमुश्च ॥ अदसष्टाङ्गात्परः टाप्रत्ययः
नाआदेशं प्राप्नोति अदसश्च अमुआदेशो भवति अ
स्त्रियां स्त्री विषयं वर्जयित्वा अमुना अस्त्रियामिति कि
म् अमुया ॥ इदुतोऽस्त्रि ॥ अग्निसंज्ञकाल्लि
ङ्गात् इः एद्भवति उः ओद्भवति जसिपरे अग्नयः पट
वः वृद्धयः धेनवः ॥ सम्बुद्धौ च ॥ अग्निसंज्ञ
काल्लिङ्गात् इः एद्भवति उः ओद्भवति सम्बुद्धौ पर
स्याम् हे अग्ने हे पटो हे वृद्धे हे धेनो ॥ ङे च ॥ अ
ग्निसंज्ञकाल्लिङ्गात् इः एद्भवति उः ओद्भवति ङे प्र
त्यये परे अग्नये पटवे वृद्धये धेनवे ॥ ङसिङसो
रलोपश्च ॥ अग्निसंज्ञकाल्लिङ्गात् इः एद्भवति
उः ओद्भवति ङसिङसोः परयोः तयोश्च अकारलो
पं प्राप्नोति अग्नेः अग्नेः पटोः पटोः वृद्धेः वृद्धेः धेनोः
धेनोः ॥ गोश्च ॥ गोशब्दात्परयोः ङसि ङसोः
अकारलोपो भवति गोः गोः द्योशब्दादपीष्यते द्योः
द्योः ॥ ङिरौ सपूर्वः ॥ अग्निसंज्ञकाल्लिङ्गात्परो
ङि प्रत्ययः पूर्वेण वर्णेन सह औकारं प्राप्नोति अग्नौ
पटौ वृद्धौ धेनौ ॥ सखिपत्योर्ङिः ॥ सखिप
तिशब्दाभ्यां परो ङिप्रत्ययः औत्वं प्राप्नोति सख्यौ प
त्यौ ॥ ङसिङसोरुः ॥ सखिपतिशब्दाभ्यां पर
योः ङसि ङसोः अकार उत्वं प्राप्नोति सख्युः सख्युः
पत्युः पत्युः ॥ ऋदन्तात्सपूर्वः ॥ ऋदन्ता
ल्लिङ्गात्परयोः ङसि ङसोः अकारः पूर्वेण वर्णे

नप्तृ. उत्वमाप्नोति पितुः पितुः मातुः मातुः भ्रा
तुः भ्रातुः कर्तुः कर्तुः स्वसुः स्वसुः नुः नुः
**आसौ सिलोपश्च** ऋदन्तस्यलिङ्गस्य सौसि
प्रत्ययेपरे आत्वंभवति सेश्चलोपः पिता माता
भ्राता कर्ता स्वसा ना **अग्निवच्छसि** ऋद
न्तलिङ्गस्याग्निवद्भवति अग्नि सत्कालिङ्गात्परस्य
शसः शसोकारः सश्चनोऽस्त्रिया मित्यकारस्य
पूर्ववर्णादेशः सकारस्यच अस्त्रियांनत्वं यदुक्तं
तदृदन्तादपि भवतीत्यर्थः पितॄन् भ्रातॄन् कर्तॄ
न् नॄन् स्त्रियां सस्यनत्वंनास्ति यथा मातॄः स्व
सॄः **अरङौ** ऋदन्तस्यलिङ्गस्य अर् आदे
शोभवति ङिप्रत्ययेपरे पितरि मातरि भ्रातरि
कर्तरि स्वसरि नरि **घुटिच** ऋदन्तस्य
लिङ्गस्य अर् भवति घुटिपरे पितरौ पितरः पि
तरम् पितरौ मातरौ मातरः मातरम् मातरौ
भ्रातरौ भ्रातरः भ्रातरं भ्रातरौ नरौ नरः नरम् न
रौ **धातोस्तृणाहस्यार्** धातोः परस्य
तृणाहस्य आर् आदेशोभवति घुटिपरे कर्तारौ
कर्तारः कर्तारम् कर्तारौ वक्तारौ वक्तारः वक्तार
म् वक्तारौ **स्वस्रादीनांच** स्वस्रादीनां
यः ऋकारस्तस्य आर् भवति घुटिपरे स्वसारौ
स्वसारः स्वसारम् स्वसारौ नप्तारौ नप्तारः नप्तार
म् नप्तारौ स्वसा नप्ताच नेष्टाचत्वष्टाक्षत्तामैत्रा

त्र होता पोता प्रशास्ता चाष्टौ स्वस्रादयः स्मृताः
आत्वं न सम्बुद्धौ ऋदन्तस्य लिङ्गस्य आत्वं न भ
ति घसौ सिलोपश्चेत्यनेन आत्वं च न भवति यादिशो
क्याद्गुटिचेत्यर् एव भवति सम्बुद्धौ परतः हे पितः हे
मातः हे भ्रातः हे कर्तः हे स्वसः हे नः अज्ञनाचेति
सिलोपः ह्रस्वनदीश्रद्धाभ्यः सिर्लोपम्
ह्रस्वान्तात् नदीसंज्ञकात् श्रद्धासंज्ञकाच्च लिङ्गात्परः
सम्बुद्धिसिकारः लोपमाप्नोति हे हर हे नदि हे वध्र
हे गङ्गे आमि नुः ह्रस्वनदीश्रद्धाभ्यः आमि प
रे नुरागमो भवति हराणाम् अग्नीनाम् वायूनाम्
पितॄणाम् नदीनाम् वधूनाम् गङ्गानाम् उमानाम्
त्रेस्त्रयश्च त्रिशब्दस्यामि परे त्रय आदेशो भव
ति त्रेस्त्रयादेशः त्रयाणाम् परमत्रयाणाम्
चतुरः चतुर् शब्दस्यामि परे नुरागमो भवति
चतुर्णाम् षट्संज्ञायाः सान्तायाः षकार
नकारान्तायाः संज्ञायाः आमि परे नुरागमो भव
ति षण्णाम् पञ्चानाम् सप्तानाम् दशानाम् क
तेश्च जस्शसोर्लुक् षकारनकारान्तायाः सं
ज्ञायाः कतिशब्दाच्च परयोः जस्शसोः लुक् भवति
षट् तिष्ठन्ति षट् पश्य पञ्च तिष्ठन्ति पञ्च पश्य सप्त ति
ष्ठन्ति सप्त पश्य दश तिष्ठन्ति दश पश्य कति तिष्ठ
न्ति कति पश्य नियो ङेराम् णीञ् प्राप
णे इत्यस्मात् क्विबन्तात्परः ङिप्रत्ययः आम् भवति

निद्याम् सेनान्याम् ग्रामण्याम्     इति लत्तुह
न्तो नाम प्रकरणो लिङ्गपादः प्रथमः १
शेषेन सखिविष्टादावग्निः     सखिशब्दः अग्नि
संज्ञो न भवति टादौ विभक्तिगणे परे सख्या सख्ये
टादाविति किम् सखीन्     पतिरसमासे प
तिशब्दः अग्निसंज्ञो न भवति टादौ विभक्तिगणे परे
असमासे समासविषयं वर्जयित्वा पत्या पत्ये टादा
विति किम् पतीन् असमासे इति किम् नरपतिना न
रपतये     स्त्रीनदीवत्     स्त्रीशब्दो नदीवद्भव
ति स्त्री हे स्त्रि स्त्रीणाम्     स्त्र्याख्यौ यिवस्थानावा
मि     स्त्र्याख्यौ स्त्रीवाचकौ ईदूतौ ययोः स्थाने इ
य् उव् इत्येतावादेशौ तौ आमि परे नदीवद्वा भव
तः श्रीणाम् वा श्रियाम् भ्रूणाम् वा भ्रुवाम्     ङि
त्सु च वा     स्त्र्याख्यौ स्त्रीवाचकौ यौ ईदूतौ ययोः
स्थाने इय् उव् इत्येतावादेशौ तौ ङवति वचने परे
नदीवद्भवतः तयोश्च ह्रस्वः तथा तयोश्च स्त्र्याख्ययोः स्त्री
लिङ्गः ह्रस्वान्तः अग्निसंज्ञश्च श्रियै श्रियाः श्रियाः श्रि
याम् श्रिये श्रियः श्रियः श्रियि भ्रुवै भ्रुवाः भ्रुवाः भ्रु
वाम् भ्रुवे भ्रुवः भ्रुवः भ्रुवि बुद्ध्यै बुद्ध्याः बुद्ध्याः बु
द्ध्याम् बुद्धये बुद्धेः बुद्धेः बुद्धौ धेन्वै धेन्वाः धेन्वाः धे
न्वाम् धेनवे धेनोः धेनोः धेनौ     नपुंसकात्स्य
मोर्लोपोऽचिनच्च नङकाम्     नपुंसकलिङ्गात्
परयोः स्यमोर्लोपो भवति तयोश्च परयोः यदुक्तं

दभे सक्थ्ना सक्थ्ने अक्ष्णा अक्ष्णो टादाविति किम् । अ
स्थीनि सक्थीनि इति किम् । अस्थिभिः ॥ भाषितपुंस्कं
पुंवद्वा ॥ भाषितपुंस्कं नाम्यन्तं नपुंसकलिङ्गं
टादौ स्वरे परे पुंवद्वा भवति पुंसि यत्कार्यमुक्तं त
द्भाषितपुंस्कस्यापि भवतीत्यर्थः । शुचिने वा शुचये
शुचिनः वा शुचेः शुचिनः वा शुचेः शुचिनि वा शुचौ
एवं मृदुने वा मृदवे मृदुनः वा मृदोः मृदुनः वा
मृदोः मृदुनि वा मृदौ एवं ग्रामणिने वा ग्रामण्ये
ग्रामणिनः वा ग्रामण्यः ग्रामणिनः वा ग्रामण्यः ग्रा
मणिनि वा ग्रामण्याम् ॥ **दीर्घो नामि सनौ ॥**
ह्रस्वान्तं लिङ्गं दीर्घमाप्नोति आमि सनुडागमे परे ह
तानाम् अग्नीनाम् वायूनाम् पितॄणाम् ॥ **ना
न्तस्योपधायाः ॥** नान्तस्य लिङ्गस्य उपधा
या दीर्घो भवति सनुडागमे आमि परे पञ्चानाम् स
प्तानाम् दशानाम् ॥ **घुटि चासम्बुद्धौ ॥** ना
न्तस्य लिङ्गस्य उपधाया दीर्घो भवति घुटि असम्बुद्धौ ।
परे राजा राजानौ राजानः राजानम् राजानौ ।
**सान्तमहतो नोपधायाः ॥** सान्तस्य लिङ्ग
स्य महत् इत्यस्य च या नोपधा उपधाभूतो नकारस्त
स्योपधाया दीर्घो भवति घुटि असम्बुद्धौ परे । विद्वान्
विद्वांसौ विद्वांसः विद्वांसम् विद्वांसौ महान् महा
न्तौ महान्तः महान्तम् महान्तौ ॥ **अपश्च ॥**
अप् शब्दस्योपधास्वरस्य दीर्घो भवति घुट्यसम्बुद्धौ

परे आपः स्थानिवत्त्वाकानि **अत्वसन्तस्य**
**चाधातोः सौ** अत्वन्तस्य शब्दस्य असन्तस्य च
अधातोः यातवर्जितस्य अन्त्यस्याकारस्य दीर्घो भव
ति सौ असम्बुद्धौ परे भवान् गोमान् चन्द्रमाः अप्सराः
सुयशाः **इन्हन्पूषार्यम्णां शौ सौ च** इन् ह
न् पूषन् अर्यमन् एतेषामुपधाया दीर्घो भवति शौ सौ
च परे बहुदण्डीनि बहुवृत्रहाणि बहुपूषाणि बह्वर्य
माणि दण्डी वृत्रहा पूषा अर्यमा **उशनस्**
**पुरुदंसोऽनेहसां सावनङ्** उशनस् पुरुदं
सस् अनेहस् एषामनङ् अनादेशं प्राप्नोति असम्बु
द्धौ सौ परे उशना पुरुदंसा अनेहा असम्बुद्धाविति
किम् हे उशनः हे पुरुदंसः हे अनेहः उशनस् शब्द
स्य सम्बुद्धिविषये रूपाणि भवन्ति हे उशनन् हे उशनः हे
उशन माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रप
दां वरिष्ठः संबोधने तूशनसस्त्रिरूपं नान्तं तथा।
सान्तमथाप्यदन्तम् **सख्युश्च** सखिशब्दस्या
न्तः अनादेशं प्राप्नोति सौ असम्बुद्धौ परे सखा असम्बु
द्धाविति किम् हे सखे **सुटि चै** सखिशब्दस्या
न्तः ऐकारं प्राप्नोति सुटि परे सखायौ सखायः
सखायम् सखायौ **दिव उज्झले** दिव्
शब्दस्यान्तस्य उत्वं भवति झल्परे द्युभ्याम् द्युभिः
द्युषु द्युता द्युत्वम् **औ सौ** दिवशब्दस्य अ
न्त्यस्य औत्वं भवति सौ सिप्रत्यये परे द्यौः हे द्यौः।

वाम्या दिवशब्दस्यान्त्यस्य वा आत्वं भवति अमिपरे द्याम् वा दिवम् **युजेरसमासे नुम्बुटि** युजि र् योगे इत्यस्याकिबन्तस्य नुमागमो भवति बुटिपरे अ समासे समासविषयं वर्जयित्वा युङ् युञ्जौ युञ्जः यु ञ्जम् युञ्जौ असमासे इति किम् अश्वयुक् **अ भ्यस्तादन्तिरनकारः** अभ्यस्तात्परः अन्तु शा त्रः अनकारोऽन्तस्य नकारो भवति बुटिपरे ददत् दध त् बिभ्रत् जक्षत् जाग्रत् **वा नपुंसके** अभ्य स्तात्परः अन्तुशत्रः अनकारोऽन्तस्य नकारो वा भवति बुटिपरे नपुंसकविषये ददन्ति ददति जक्षति

जक्षन्ति जाग्रति जाग्रन्ति कुलानि **तुदभा दिभ्य ईकारे** तुदादिभ्यो धातुभ्यो भादिभ्यश्च अन्तु धातोऽन्तस्य नकारो वा भवति ईकारे परे तुदतीकु ले वा तुदन्तीकुले तुदती स्त्री वा तुदन्ती स्त्री भातीकु ले वा भान्तीकुले भाती स्त्री वा भान्ती स्त्री **हनो ह्रौघ्निरुपधालोपे** हन् हिंसागत्योरित्यस्य उ पधालोपे सति हस्य घत्वं भवति वृत्रघ्नः वृत्रघ्ना वृत्र घ्ने शत्रुघ्नः शत्रुघ्ना शत्रुघ्ने उपधालोपे इति किम् वृ त्रहणौ **गोरौबुटि** गोशब्दस्यान्त्यस्य औत्वं भ वति बुटिपरे गौः गावौ गावः द्योशब्दादपीच्छन्ति द्यौः द्या वौ द्यावः **अम्शसोरा** गोशब्दस्यान्त्यस्य आत्वं भवति अम्शसोःपरे गाम् गाः द्याम् द्याः **प थिमथ्यृभुक्षामात्** पथि मथि ऋभु

ति एषामन्तस्यात्वं भवति सौ परे पन्थाः मन्थाः ऋभुक्षाः साविति किम् पथिभिः **अनन्तो बुटि** पन्थ्यादीनामन्तः अनादेशं प्राप्नोति बुटि परे पन्थानौ पन्थानः पन्थानम् पन्थानौ मन्थानौ मन्थानः मन्थानं मन्थानौ ऋभुक्षाणौ ऋभुक्षाणः ऋभुक्षाणम् ऋभुक्षाणौ बुटीति किम् पथिषु **अबुट्स्वरे लोपम्** पन्थ्यादीनामन्तः लोपं प्राप्नोति अबुटि स्वरे परे पथः पथा पथे मथः मथा मथे ऋभुक्षः ऋभुक्षा ऋभुक्षे **व्यञ्जने चैषां निः** पन्थ्यादीनां नकारो लोपं प्राप्नोति स्वरव्यञ्जनयो रबुटोः परयोः पथः पथिभिः पथिषु मथः मथिभिः मथिषु **अनुषङ्गश्चाक्रुञ्चेः** अनुषङ्गो लोपं प्राप्नोति स्वरव्यञ्जनयोरबुटोः परयोः अक्रुञ्चेः क्रुञ्चगतिकौटिल्याल्पीभावयोः विन्यस्तानुषङ्गं वर्जयित्वा विदुषः विदुषा विदुषे महतः महता महते विद्वद्भिः महद्भिः अबुटोरिति किम् विद्वांसौ महान्तौ अक्रुञ्चेरिति किम् क्रुञ्चा क्रुञ्चाम् क्रुञ्च **पुंसोऽम्शब्दलोपः** पुमन्स् इत्यस्य अम्शब्दलोपो भवति स्वरव्यञ्जनयोरबुटोः परयोः पुंसः पुंसा पुंसे पुंभ्यां पुंभिः पुंसु अबुटोरिति किम् पुमांसौ

**चतुरो वा शब्दस्योत्वम्** चतुर् शब्दस्य वा शब्दस्योत्वं भवति स्वरव्यञ्जनयो रबुटोः परयोः चतुरः चतुर्भिः चतुर्भ्यः चतुर्णाम् चतुर्षु ॥

**अनडुहश्च** अनडुह् शब्दस्य योवा शब्दस्तस्य उ
त्वंभवति स्वरव्यंजनयोर्घुटोः परयो अनड्वहः अ
नडुहा अनडुहे अनडुद्भ्याम् अनडुत्सु अघुटोरितिकि
म् अनड्वाहौ **सौवः** अनडुह् शब्दस्य सौपरे
उगागमोभवति अनड्वान् **सम्बुद्धावुभयो**
**र्ह्रस्वः** उभयोश्चत्वार् अनडुहोः सम्बुद्धौपरे
सति ह्रस्वोभवति हेप्रियचत्वः हेअनड्वन् **अ**
**दसः पदेमः** अदस् शब्दस्य पदेपदकार्ये कृते
सति दस्य मत्वंभवति अमुष्मै अमुष्मात् अमुष्मिन्
अमुया अमुयोः **अघुट्स्वरादौसेट्कस्या**
**पिवसेर्वशब्दस्योत्वम्** वसेः वस् इत्य
स्य योवशब्दस्तस्य सेट्कस्य इट्सहितस्य अपिशब्दात्
इड्रहितस्यापि उत्वंभवति अघुट्स्वरादौप्रत्ययेपरे
पेचुषः पेचुषा पेचुषे विदुषः विदुषा विदुषे अघु
ट्स्वरादावितिकिम् पेचिवांसौ विद्वांसौ **श्व**
**युवमघोनांच** श्वन् युवन् मघवन् एषांव
शब्दस्य उत्वंभवति अघुट्स्वरादौप्रत्ययेपरे शुनः
शुना शुने यूनः यूना यूने मघोनः मघोना मघो
ने अघुट्स्वरादावितिकिम् श्वानौ युवानौ मघवा
नौ **वाहेर्वाशब्दस्योत्वम्** वाहेः वहप्रा
पणे इत्यस्य विण्प्रत्ययान्तस्य योवाशब्दस्तस्य औत्वंभ
वति अघुट्स्वरादौ प्रत्ययेपरे पष्ठौहः पष्ठौहा पष्ठौ
हे तुर्यौहः तुर्यौहा तुर्यौहे अघुट्स्वरादा विति।

किम् पश्वाञ्चौ तर्यञ्चौ   अञ्चेर्लोपः पू
र्वस्य च दीर्घः   अञ्चगतिपूजनयोरित्यस्य क्विब
न्तस्य अकारलोपो भवति पूर्वस्य च ह्रस्वस्य दीर्घो भव
ति अघुट्स्वरादौ प्रत्यये परे प्रतीचः प्रतीचा प्रतीचे
मधूचः मधूचा मधूचे   तिर्यङ्तिरश्चः ति
र्यञ्च् शब्दः तिरश्चादेशं प्राप्नोति अघुट्स्वरादौ प्रत्य
येपरे तिरश्चः तिरश्चा तिरश्चे अघुट्स्वरादाविति
किम् तिर्यञ्चौ तिरञ्चाम्   उदङ्ङुदीचः
उदञ्च् इत्यस्य उदीच् आदेशो भवति अघुट्स्वरादौ
प्रत्ययेपरे उदीचः उदीचा उदीचे अघुट्स्वरादावि
तिकिम् उदञ्चौ   पादः पत्समासान्तः पा
दशब्दः समासान्तः समासस्योत्तरपदभूतः पदादेशं
प्राप्नोति अघुट्स्वरादौ प्रत्ययेपरे व्याघ्रपदः व्याघ्रपदा
व्याघ्रपदे द्विपदः द्विपदा द्विपदे सुपदः सुपदा सु
पदे   अवमसंयोगादनोऽल्लोपोऽलुप्तवच्च
पूर्वविधौ   अनः अन्नाङ्गस्य अकारलोपो भव
ति अघुट्स्वरादौ प्रत्ययेपरे अवमसंयोगाद्वकारमका
रसंयोगात्परस्य न भवति अलुप्तवच्च पूर्वविधौ पूर्व
स्य विधौ कार्ये कर्तव्ये अकारलोपो अलुप्तवद्भवति अ
कारलोपे कृते यत्कार्यं प्राप्तं तन्न भवतीत्यर्थः राज्ञः रा
ज्ञा राज्ञे तवर्गस्य टतिनस्य चः अकारलोपे कृते जका
रस्य नकारे अञ्जने परे च वर्ग हगादीनां चेति णत्वं ॥
प्राप्तं न भवति अवमसंयोगादिति किम् यज्वनः क

र्मणः ईङ्योर्वा अवमसंयोगात्परस्य अनः अकारलोपो वा भवति ईङि इ इत्येतयोः परयोः साम्नी वा सामनी राज्ञि वा राजनि अवमसंयोगादिति किम् यज्वनी कर्मणी आधातोरघुट्स्वरे धातोराकारस्य अघुट्स्वरादौ प्रत्यये परे लोपो भवति कीलालपः कीलालपा कीलालपे आ इति किम् लूपवे ईदूतावियुवौ स्वरे धातोर्यौ ईदूतौ तयोर्यथासंख्यम् इय् उव् इत्येतावादेशौ भवतः स्वरेपरे नियौ नियः लुवौ लुवः धातोरिति किम् लक्ष्म्यौ कर्त्र्यौ ईदूताविति किम् लूपवौ स्वरे इति किम् नीभ्याम् लूभ्याम् सुधीः सुधीशब्दस्य ईकारस्य इय् आदेशो भवति स्वरेपरे सुधियौ सुधियः स्वरे इति किम् सुधीभिः भुवोऽवर्षाभूपुनर्भ्वः भूशब्दस्य ऊकारस्य उव् आदेशो भवति स्वरेपरे अवर्षाभूपुनर्भ्वः वर्षाभूपुनर्भूशब्दयोः ऊकारं वर्जयित्वा प्रतिभुवौ प्रतिभुवः अवर्षाभूपुनर्भ्व इति किम् वर्षाभ्वौ वर्षाभ्वः पुनर्भ्वौ पुनर्भ्वः अनेकाक्षरयोरिति वक्तव्यम् अनेकाक्षरयोस्त्वसंयोगे अनेकाक्षरयोरनेकस्वरयोः शब्दयोः यौ ईदूतौ तयोः यव इत्येतावादेशौ भवतः स्वरेपरे असंयोगात्संयोगात्परौ यदि ईदूतौ तयोः यवौ भवतः ग्रामण्यौ ग्रामण्यः खलप्वौ खलप्वः अनेकाक्षरयोरिति किम् नियौ नियः असंयोगादिति किम् य

वक्रियौ कटप्रुवौ ॥ भ्रूर्धोवत् ॥ भ्रूशब्दोधा-
तुवद्भवति स्वरेपरे यथाधातोः उवादेशउक्तस्तथा
भ्रूशब्दस्यापिभवतीत्यर्थः भ्रुवौ भ्रुवः स्वरेइतिकिम्
भ्रूभिः ॥ स्त्रीच ॥ स्त्रीशब्दोधातुवद्भवति स्वरेपरे
यथाधातोः ईकारस्य इयादेशउक्तस्तथास्त्रीशब्दस्या
पिभवतीत्यर्थः स्त्रियौ स्त्रियः स्वरेइतिकिम् स्त्रीभिः
॥ वाम्शसोः ॥ स्त्रीशब्दोधातुवद्वाभवति अ
मिशसिपरे स्त्रियम् वास्त्रीम् स्त्रियः वास्त्रीः अम्श।
सोरादिर्लोपाभिन्यकारलोपः ॥ भवतोवादेकव
सम्बुद्धौ ॥ भवन्तृ इत्यस्य योवादिरवयवोवन्तु इ
त्ययंशब्दस्तस्य उत्वंभवति सम्बुद्धौपरस्याम् हेभोः।
हेभवन् ॥ अव्ययसर्वनाम्नःस्वरादन्त्यात्पूर्वो
कः ॥ अव्ययानांसर्वनाम्नांच अन्त्यात्स्वरात्पूर्वोवा
अक प्रत्ययोभवति अज्ञातेकुत्सितेल्पेच तथाह्रस्वात्र
कम्पयोः संज्ञायामपिविज्ञेयः प्रत्ययोयंप्रकीर्तितः
कस्येदमुच्चैः उच्चकै एवं नीचैः नीचकैः अज्ञातः सर्वः
सर्वकः कुत्सितोयः यकः अल्पःसः सकः ह्रस्वः प
टः पटकः अनुकम्पितोभवान् भवकान् ॥ के
प्रत्ययेस्त्रीकृताकारपरेपूर्वोकारइकारम् ॥
स्त्रियांकृतः आकारः परोयस्मात्तस्मिन्ककारेप्र
त्यये प्रत्ययस्थेपरेपूर्वोऽकारइकारमापद्यते सर्विका
विश्विका कारिका हारिका अव्ययसर्वनाम्नइत्यक प्र
त्ययः स्त्रियामादाप् अनेनइत्वम् ॥ इतिल।

युष्मदोनामप्रकरणेस्मिन्विधादेशोद्वितीयः १

ॐ युष्मदस्मदोः पदंपदात्षष्ठीचतुर्थीद्वितीयास्थवस्नसौ   युष्मदस्मदोः सर्विधयत्पदंपदात्परं षष्ठी चतुर्थी द्वितीयास्थबहुत्वे स्थितं तस्ययथासंख्यंवस् नस् इत्येतावादेशौ भवतः शिवोवः स्वामी शिवोयुष्माकम् शिवोनः स्वामी शिवोऽस्माकम् शिवोवोदास्यति शिवोयुष्मभ्यम् । शिवोनोदास्यति शिवोऽस्मभ्यम् शिवोवोरक्षति शिवोयुष्मान् शिवोनोरक्षति शिवोऽस्मान्   वांनौद्विवे   युष्मदस्मदोः सर्वत्रियत्पदं पदात्परं षष्ठी चतुर्थी द्वितीयास्थद्वित्वेस्थितंतस्य यथासंख्यंवांनावित्येतावादेशौभवतः शिवोवांस्वामी शिवोयुवयोः शिवोनौस्वामी शिवआवयोः शिवोवांदास्यति शिवोयुवाभ्यां शिवोनौदास्यति शिवआवाभ्याम् शिवोवांरक्षति शिवोयुवाम् शिवोनौरक्षति शिवआवाम्   तेमयावेकत्वेतेमे युष्मदस्मदोरेकत्वे नियतप्रयोगौयौत्वन्मदौ तयोर्यत्पदंपदात्परं तस्य यथासंख्यंतेमे इत्येतावादेशौभवतः षष्ठीचतुर्थ्योः परयोः शिवस्तेस्वामी शिवस्तव शिवोमेस्वामी शिवोमम शिवस्तेदास्यति शिवस्तुभ्यम् शिवोमेदास्यति शिवोमह्यम्   त्वामावद्वितीयायाम्   युष्मदस्मदोरेकत्वे नियतप्रयोगौयौत्वन्मदौ तयोर्यत्पदंपदात्परं तस्ययथासंख्यं त्वामाइत्येता

वादेशो भवतः शिवस्त्वा रक्षतु शिवस्त्वाम् शिवो मा र
क्षतु शिवो माम्   न पादादौ   पादस्य श्लोक
पादस्य आदौ यत्स्थितं त्वन्मयुष्मदस्मदोः पदं पदात्परे
तस्य वस्नसादय आदेशा न भवन्ति भूयाद्व राघवस्त्रयुष्म
युष्माकं श्रेयसे शिवः स एव देवो भवतादस्माकमभय
दः अस्याहिभुवने नास्ति तव तुल्यः कृपाम्बुधिः त्वयी
ईशाकृतावन्ते मम कास्यात्वरागतिः निवेदयामि विज्ञ
प्तिं तस्यै चन्द्रशिलामणौ वचो भवाग्नितप्ताय मह्यदे
हि मतोपमम्   शर्वगौरि नमस्यामि युवयोश्चरणाव
हम् अश्मन्यकमः स्वामिन्नावयोरत्र सुस्थिरः स
न्तः शोसन्निशरणं नां शार्वशरणार्थिनाम् तस्मान्ना
नन्यशरणान्मे त्वनाथान् मर्हसि पादादाविति किम्
देवः कुमुदिनीकान्तशेखरः श्रेयसेस्तु वः वसन्त्यन्त
र्गिकापीठे तिमिरं योद्धिनाश्नितः   चादियोगे च

च वा हा अह एव इत्येतैर्योगे संबन्धे सति
त्वन्मयुष्मदस्मदोः पदस्य पदात्परस्य वस् नसादय
आदेशा न भवन्ति शिवो युष्माकं च स्वामी शिवो
स्माकं च स्वामी ग्रामस्तव वा स्वम् ग्रामो मम वा स्व
म् ग्रामो युवाभ्यां वा दीयते ग्राम आवाभ्यां वा दी
यते   पञ्चाविभक्तावन्तलोपः   पञ्चा
त्वन्मयुष्मदस्मदो विभक्तौ परतः अन्तलोपो भव
ति त्वया मया त्वत् मत् युष्मभ्यम् अस्मभ्यम् यु
ष्मत् अस्मत्   युवावौ द्विवाचिनोः

द्विवाचिनोऽर्थप्रतिपादकयोर्युष्मदस्मदोर्विभक्तौ परतः यथासङ्ख्यं युव आव इत्येतावादेशौ भवतः यु वाम् युवाम् युवाभ्याम् आवाभ्याम् युवयोः आव योः **अमौ वा** त्वमयुष्मदस्मत्परौ अम् औच आमादेशौ भवतः त्वाम् माम् युवाम् आवा म् **आम्भ्यसः** त्वमयुष्मदस्मद्भ्यः परा भ्यासः आम् आदेशो भवति अतिवान् अतिमान् यु ष्मान् अस्मान् **त्वमहं सौ सविभक्त्योः** त्वमदोः सविभक्त्योर्विभक्तिसहितयोः सौ परे त्वम् अहम् इत्येतावादेशौ भवतः त्वम् अहम् **यूयं वयं जसि** युष्मदस्मदोः सविभक्त्योः जसि परे यूयंवयमित्येतावादेशौ भवतः यूयम् वयम् **तुभ्यमह्यं ङयि** त्वमदोः सविभक्त्योः ङयि ङे प्रत्यये परे तुभ्यं मह्यमित्येतावादेशौ भवतः तुभ्यम् मह्यम् **तवममङसि** त्वमदोः सविभ क्त्योः ङसि परे तवममइत्येतावादेशौ भवतः तव मम **अत्यङ्गपञ्चम्याः** त्वमयुष्मदस्मद्भ्यः परापञ्चमी अत्प्रत्ययते अद्वित्वे द्विवचनं वर्जयि त्वा त्वत् मत् युष्मत् अस्मत् अद्वित्वे इति किम् यु वाभ्याम् आवाभ्याम् **भ्यसभ्यम्** युष्म दस्मद्भ्यां परो भ्यस्प्रत्ययः भ्यम् आदेशमाप्नोति युष्म भ्यम् अस्मभ्यम् **सामाकम्** त्वमयु। ष्मदस्मद्भ्यः परः सामागमयुक्त आम् आकमादेशं।

प्नोति अतित्वाकम् अतिमाकम् युष्माकम् अस्मा
कम् **एत्वमस्यानिति** त्वमयुष्मदस्मदा
मन्त्यस्य एत्वंभवति अस्यानिति अकृतादेशोविभ
क्तिवचनेपरे त्वया मया त्वयि मयि युवयोः आव
योः अस्यानितीतिकिम् युष्माकम् अस्माकम्
**आत्वंव्यञ्जनादौ** त्वमयुष्मदस्मदाम
न्त्यस्य आत्वंभवति व्यञ्जनादावकृतादेशोविभक्ति
वचनेपरे अतित्वाभिः अतिमाभिः युष्माभिः अस्मा
भिः अस्यानितीतिकिम् युष्मभ्यम् अस्मभ्यम्
**रैः** रैशब्दस्यान्त्यस्यात्वंभवति व्यञ्जनादौविभक्तौ
परतः राः राभ्याम् रासु **अष्टनःसर्वासु**
अष्टन् शब्दस्यान्त्यस्यात्वंभवति सर्वासुविभ
क्तिषुपरतः अष्टाभिः अष्टाभ्यः अष्टानाम् अष्टासु
**औतस्माज्जस्शसोः** तस्मादष्टनःकृता
त्वात् परयोःजस्शसोः औत्वंभवति अष्टौतिष्ठन्ति
अष्टौपश्यपक्षे अष्ट अष्ट अष्टभिः अष्टभ्यः अष्टभ्य
अष्टानाम् अष्टसु **अर्वन्नर्वन्तिरसावन**
**ञः** अर्वन्शब्दः अर्वन्तिमादेशमाप्नोति अ
सौसिप्रत्ययंवर्जयित्वा अर्वन्तौ अर्वन्तः अर्वन्तम् अ
र्वन्तौ अर्वतः अर्वता अर्वते अर्वद्भ्याम् अर्वत्सु अ
सौवितिकिम् अर्वा अनञइतिकिम् अनर्वाणौ
**सौचमघवन्मघवावा** मघवन् शब्दःमघ
वन्त् आदेशमाप्नोति वाविकल्पेन सौच अप्रत्यये

येचपरे मघवान् मघवन्तौ मघवन्तः मघवन्तम् मघवन्तौ मघवतः मघवता मघवते मघवद्भ्याम् मघवत्सु पक्षे मघवा मघवानौ मघवानः मघवानम् मघवानौ मघोनः मघोना मघोने मघवभ्याम् मघवसु **जराजरस्स्वरे वा** जराशब्दस्य जरस आदेशो वा प्राप्नोति स्वरे परे जरसौ जरसः जरसम् जरसौ जरसा जरसे जरसः जरसोः जरसाम् जरसि पक्षे जरे जराः जरया जरायै जरायाः जरायाः जरयोः जराणाम् जरायाम् स्वर इति किम् जराभिः

**त्रिचतुरोः स्त्रियां तिसृचतसृ विभक्तौ**

त्रिचतुर् इत्येतयोः स्त्रियां वर्तमानयोः यथासङ्ख्यं। तिसृचतसृ इत्येतावादेशौ भवतः विभक्तौ परतः तिस्रः चतस्रः तिसृभिः चतसृभिः स्त्रियामिति किम् त्रयः चत्वारः त्रीणि चत्वारि **तौ रं स्वरे** तिसृचतसृ इत्येतौ रत्वमापद्येते स्वरे परे ऋदन्तकार्यणाबाधः तिस्रः चतस्रः त्रुटिचेत् शानः **न नामि दीर्घम्** तिसृचतसृ इत्येतौ नुगागमयुक्ते आमि परे दीर्घं न प्राप्नुतः तिसृणाम् चतसृणाम् **नृ वा** नृशब्दः आमि परे दीर्घं वा प्राप्नोति नृणाम् वा नृणाम् **त्यदादीनामविभक्तौ** त्यद् तद् यद् एतद् अदस् इदम् द्वि एषामन्त्यस्य अकारादेशो भवति विभक्तौ परतः स्यः सः यः एषः द्वौ **किमः कः** किंशब्दस्य क आदेशो भवति विभक्तौ परस्याम् कः कौ क

मकेकेन कस्मै **दोद्वेमः** त्यदादीनां दकार
स्य मत्वं भवति विभक्तौ द्विशब्दं वर्जयित्वा इमौ इमे अहे
तिकिम् द्वौ द्वाभ्याम् **सोमः** त्यदादीनां
दकारस्य मत्वं भवति सौपरे असौ **तस्यच** त्यदा
दीनां तकारस्य सत्वं भवति सौपरे स्यः सः एषः
**इदमियमयम्पुंसि** इदंशब्दस्य स्त्रीविषये इ
यमादेशो भवति पुंविषये अयमादेशो भवति सौपरे
इयं स्त्री अयं पुरुषः नपुंसके इदं ज्ञानम् **अस्य**
**अनेनकः** अकुत्स्यपरहितस्य इदमः विभक्तिव्य
ञ्जनेपरे अकारादेशो भवति अस्मै आभ्याम् एभिः अस्यै
अनक इति किम् अक्तैरेभिः इमकैः **टौसोरनः**
अकुत्सयपरहितस्य इदमः अन आदेशो भवति ।
टाओस् इत्येतयोः परयोः अनेन अनयोः अनक इति ।
किम् इमकेन इमकयोः **इदमश्च** एतदश्चद्विती
याटाओस्स्वेन अन्वादेशे इमं वा एनम् इमौ वा एनौ इ
मान्वा एनान् अनेन वा एनेन अनयोः वा एनयोः
**तस्माद्भिसः** तस्मादिदमः अनकः परस्य
भिसः भिसादेशो भवति एभिः **अदसश्च**
अदसः अनकः परस्य भिसः भिसादेशो भवति अमी
भिः अनक इति किम् अमुकैः **सावौसिलो**
**पश्च** अदसः अन्त्यस्य सौपरे औत्वं भवति सेश्च
लोपः असौ असकौ **उत्वमात्** अदसः
संबन्धीयो मकारः तस्मात्परस्य वर्णस्य उत्वं भवति

अमुष्या अमुष्याः अमू अमूभ्याम् यत्र मात्परौ द्वित्वा
त्त्वयद्वित्वमात्र एत्वादेशः स्यात् नेत्वं तत्र मम इति वचना
त् आकारस्य औकारस्य च ऊकारः **एतईद्बहु ।**
**त्वे** अदसः संबन्धी यो मकारस्तस्मात्परस्य ब
हुत्वविषयस्य एकारस्य ईकारो भवति अमी अ
मीभिः अमीभ्यः अमीषाम् **अपां भे दः**
अप्शब्दस्य विभक्तिभकारे परे दत्वं भवति अद्भिः
अद्भ्यः विभक्तिभकारे इतिकिम् अपांभारः अब्भा
रः **विरामव्यञ्जनादिष्वनडुन्नहिव ।**
**सीनांच** अनडुह् नहीवस् इत्येतेषामन्त्यस्य
दत्वं भवति विरामव्यञ्जनादिषु परेषु प्रत्ययलोपेपि
यामः स्वनडुत् स्वनडुद्भ्याम् स्वनडुत्सु उपानत् उ
पानद्भ्याम् उपानत्सु सुविद्वत् सुविद्वद्भ्याम् सुवि
द्वत्सु विरामव्यञ्जनादिष्विति किम् अनडुहौ
**स्रंसिध्वसोश्च** स्रंसुध्वंसु अवस्रंसने इत्येत
योः अन्त्यस्य दत्वं भवति विरामव्यंजनादिषु परेषु
उखास्रत् उखास्रद्भ्याम् उखास्रत्सु पर्णध्वत् प
र्णध्वद्भ्याम् पर्णध्वत्सु विरामव्यंजनादिष्विति किम्
उखास्रंसौ पर्णध्वंसौ **हशषछान्ते ।**
**जादीनांडः** हकारान्तानां शकारान्तानां ष
कारान्तानां छकारान्तानांच धातूनां यजादीनां
यज् सृज् मृज् राज् भ्राज् भ्रस्ज् भ्रज् परिव्रा
ज् इत्येतेषामन्त्यस्य डत्वं भवति विरामव्यञ्जना

दिषुपरेषु मधुलिट् मधुलिड्भ्याम् मधुलिड्ढ्वम्। सविट् सविड्भ्याम् सविड्ढ्वम् त्विट् त्विड्भ्याम् त्विड्ढ्वम् षाड्षाट् षाड्षाड्भ्याम् षाड्षाड्ढ्वम् देवेट् देवेड्भ्याम् देवेड्ढ्वम् रज्जुसृट् रज्जुसृड्भ्याम् रज्जुसृड्ढ्वम् कंसपरिमृट् कंसपरिमृड्भ्याम् कंसपरिमृड्ढ्वम् सम्राट् सम्राड्भ्याम् सम्राड्ढ्वम् विभ्राट् विभ्राड्भ्याम् विभ्राड्ढ्वम् वृतवृट् वृतवृड्भ्याम् वृतवृड्ढ्वम् धानाभृट् धानाभृड्भ्याम् धानाभृड्ढ्वम् परिव्राट् परिव्राड्भ्याम् परिव्राड्ढ्वम् विरामव्यञ्जनादिष्विति किम् मधुलिहौ देवेजौ

**दादेर्हस्य गः**

दकारादेर्धातोर्हकारस्य गत्वं भवति। विरामव्यञ्जनादिषुपरेषु गोधुक् गोधुग्भ्याम् गोधुग्ध्वम् काष्ठधक् काष्ठधग्भ्याम् काष्ठधग्ध्वम् हवतेर्वेति टस्य पः

**चवर्गदृगादीनांच**

चवर्गान्तस्य पदस्य तथा दृगादीनांच दृश स्पृश ऋत्विज् दधृष् स्रज् दिश् उष्णिह् यञ्च् युञ्ज् क्रुञ्च् इत्येतेषामन्त्यस्य गत्वंभवति विरामव्यञ्जनादिषुपरेषु वाक् वाग्भ्याम् वाग्ध्वम् अर्धभाक् अर्धभाग्भ्याम् अर्धभाग्ध्वम् दृक् दृग्भ्याम् दृग्ध्वम् घृतस्पृक् घृतस्पृग्भ्याम् घृतस्पृग्ध्वम् ऋत्विक् ऋत्विग्भ्याम् ऋत्विग्ध्वम् दधृक् दधृग्भ्याम् दधृग्ध्वम् स्रक् स्रग्भ्याम् स्रग्ध्वम् दिक् दिग्भ्याम् दिग्ध्वम् उष्णिक् उष्णिग्भ्याम् उष्णिग्ध्वम् प्राङ् प्राङ्भ्याम् प्राङ्ध्वम्।

सुड् सुड्भ्याम् सुड्ढम् क्रुड् क्रुड्भ्याम् क्रुड्ढम् वि।
रामव्यञ्जनादिष्विति किम् वाचौ दिशौ। **द्रु।**
**हादीनां वा।** द्रुह् मुह् स्नुह् स्निह् एषामन्त्य
स्य वा गत्वं भवति विरामव्यञ्जनादिषु परेषु उन्मु।
क् उन्मुग्भ्याम् उन्मुक्षाम् पदेदृशाधक्षेतिकः उ
न्मुड् उन्मुड्भ्याम् उन्मुड्ढम् पात्रध्रुक् पात्रध्रुग्भ्या
म् पात्रध्रुक्षाम् पात्रध्रुड् पात्रध्रुड्भ्याम् पात्रध्रुड्ढ
म् उत्स्नुक् उत्स्नुग्भ्याम् उत्स्नुक्षाम् उत्स्नुड् उ
त्स्नुड्भ्याम् उत्स्नुड्ढम् प्रस्निक् प्रस्निग्भ्याम् प्र
स्निक्षाम् प्रस्निड् प्रस्निड्भ्याम् प्रस्निड्ढम् विराम
व्यञ्जनादिष्विति किम् उन्मुहौ। **हचतुर्थान्**
**तस्य धातोस्तृतीयादेरादिचतुर्थत्वमकृ**
**तवत्।** हकारान्तस्य चतुर्थान्तस्य धातोस्तृ।
तीयादेःस्ववर्गस्यतस्यादेरादिचतुर्थत्वं भवति तृ।
तीयस्य चतुर्थो भवतीत्यर्थः विरामव्यञ्जनादिषु परे
षु नह्यादिचतुर्थत्वमकृतवद्भवति तेन दादेर्दस्य
घ इति गत्वं भवति गोधुक् गोधुग्भ्याम् गोधुक्षाम्
काष्ठधक् काष्ठधग्भ्याम् काष्ठधक्षाम् निघुड् नि
घुड्भ्याम् निघुड्ढम् अर्धभुत् अर्धभुद्भ्याम् अर्ध।
भुत्सम् विधप् विधब्भ्याम् विधप्सम् विरामव्यञ्ज
नादिष्विति किम् गोदुहौ। **सजुषाशिषोरः**
सजुष् आशिष् इत्येतयोरन्त्यस्य रेफो भवति
विरामव्यञ्जनादिषु परेषु उत्वस्यबाधः सजूः सा

जूर्भ्याम् सजूस्त्वम् आशीः आशीर्भ्याम् आशीस्त्वम्
विरामव्यञ्जनादिष्विति किम् सजुषौ आशिषौ
इरुरोरीरूरौ धातोरवयवौ यौ इरुरौ तयो
र्यथासंख्यं ईर् ऊर् इत्येतावादेशौ भवतः विराम
व्यञ्जनादिषु परेषु गीः गीर्भ्याम् गीस्त्वम् धूः धू
र्भ्याम् धूस्त्वम् विरामव्यञ्जनादिष्विति किम् ।
गिरौ धुरौ अदसः सः अदस्शब्दस्यान्त्यस्य
सत्वं भवति विरामव्यञ्जनादिषु परेषु अदः अदो
भ्याम् अदस्त्वम् विरामव्यञ्जनादिष्विति किम् अ
दसि संयोगान्तस्य लोपः लिङ्गस्य यः
संयोगस्तस्यान्तलोपो भवति विरामव्यञ्जनादिषु
परेषु विद्वान् महान् पुंभिः संयोगादेर्धु
टः लिङ्गान्तस्य संयोगस्य य आदिर्धुट् तस्य लो
पो भवति विरामव्यञ्जनादिषु परेषु गोरट् गोर
ड्भ्याम् गोरट्त्वम् सुपट् सुपड्भ्याम् सुपट्त्व
म् विरामव्यञ्जनादिष्विति किम् गोरटौ लि
गान्तनकारस्य लिङ्गान्ते यो नकारस्तस्य लो
पो भवति विरामव्यञ्जनादिषु परेषु राजा राज
भ्यां राजत्वम् विरामव्यञ्जनादिष्विति किम् राजा
नौ न संबुद्धौ लिङ्गान्तनकारस्य लोपो
न भवति संबुद्धौ परस्याम् हे राजन् नस्यानिर्दिष्ट
मितिवचनान्नपुंसके वा न लोपः हे सामन् हे सा
म हे दण्डिन् हे दण्डि न संयोगान्तलो

त्वमवत्   नलोपःसंयोगान्तलोपश्च असिद्ध।
वद्भवति नलोपे संयोगान्तलोपे च कृते सति यत्का
र्यं प्राप्तं तन्न भवतीत्यर्थः राजभ्याम् राजसु अत्रा
कारो दीर्घमिति दीर्घः धुटिवच्चत्वे इति पत्वं च न
भवतः पुमान् गोमान् लिंगान्तनकारलोपो न भ
वति   इसुसोर्घोषवति रः   इस् उ
स् इत्येतदन्तयोः शब्दयोः नघ्यादीनाम् इत्यस्य च।
अन्तस्य रत्वं भवति घोषवति परे सर्पिर्भ्याम् धनु
र्भ्याम् दोर्भ्याम् घोषवतीति किम् सर्पिष्षु धनु।
ष्षु दोष्षु   धुटां तृतीयः   धुटां तृतीयो भ
वति घोषवति परे मरुद्भ्याम् अग्निमद्भिः ज्ञानभु।
द्भ्याम्   अघोषे प्रथमः   धुटां प्रथमो
भवति अघोषे परे अग्निमत्सु हविष्षु वीरुत्सु अ
घोषे इति किम् वीरुधौ   वा विरामे   विरा
मे वर्तमानानां धुटां प्रथमो भवति वा विकल्पेन धु
टां तृतीय इत्यनेन तृतीयोऽत्र वर्तते पक्षे सोऽपि भव।
ति वाक् वाग् अग्निमत् अग्निमद् सामित् सामिद्
रेफसोर्विसर्जनीयः   विरामे लिङ्ग
प्रत्यये व्यञ्जनादौ परे रेफसकारयोर्यथादर्शनं।
विसर्जनीयो भवति गीः धूः गीर्त्वम् धूर्त्वम्।
पयः पयोभ्याम् पयस्त्वम्   विरामव्य।
ञ्जनादावुक्तं नपुंसकात्स्यमोर्लोपेऽपि
विरामे व्यञ्जनादौ च यत्कार्यमुक्तं नपुंसकात्स्यमोः

समोलोपेहृतेपिभवति शोभनापोयस्मिन्नहनि
तत् स्हु अत्रव्यञ्जनादोदिवउद्व्यञ्जनेइतिउत्वस्य
कं नत्वंसकारस्योर्मेलोपेपिनचतेउक्तमित्यस्यमो
लोपेहृतेपिभवति शोभनाःपन्थानोयत्रतत् सुप
थि अत्रव्यञ्जनेचैषांनिरितिनलोपोभवति

**इतिलघुवृत्तौनामप्रकरणेऽष्टमपादस्तृ**
**तीयः ३** **ॐअव्ययीभावादकारान्ता**
**द्विभक्तीनामम पञ्चम्याः** **अकारान्ताद**
व्ययीभावात्परासांविभक्तीनाम् अमादेशोभवति
अपञ्चम्याः पञ्चमीविभक्तिंवर्जयित्वा उपकुम्भं
तिष्ठति उपकुम्भंपश्य उपकुम्भंदेहि उपकुम्भं
स्वम् अकारान्तादितिकिम् समीपंवध्वाः उपव
धु ह्रस्वोनपुंसकेइतिह्रस्वः अव्ययस्माल्लुगितिसिलोपः ।
अपञ्चम्याइतिकिम् उपकुम्भादागतः **वा**
**तृतीयासप्तम्योः** **अकारान्तादव्ययीभा**
वात्परयोस्तृतीयासप्तम्योः अमादेशोवाभवति
उपकुम्भंकृतम् उपकुम्भेनकृतम् उपकुम्भंस्था
पय उपकुम्भेस्थापय अकारान्तादितिकिम् उपवधु
कृतम् उपवधुस्थापय **अव्ययस्माल्लुक्**
अव्ययात् अनकारान्तात् अव्ययीभावात् परासांवि
भक्तीनांलुक्भवति उपवधुतिष्ठति उपवधुपश्य उ
पवधुकृतम् उपवधुदेहि उपवधुआगतः उपवधु
स्वम् उपवधुस्थापय सम्बद्धिः कर्तृणां सुकर्तृ ।

पश्चात्त्वयाः अत्र नदिविधिमनतिक्रम्य यथाविधि ।
**अभ्यासाच्च** अभ्यासात्परस्याविभक्तीनां
त्वं भवति च का हा अह एव यामस्तेस्त्वम् न
गोचरेत्वम् **तद्राजानांबहुत्वेस्त्रियाः**
**मपत्यप्रत्ययस्य** येषाह्लादेशास्परात्तांच ।
वाचकात्तेद्राजाः तद्राजानांसम्बन्धिनः अपत्यप्र
त्ययस्य बहुत्वे उत्पन्नस्य लुग्भवति अस्त्रियांस्त्री ।
विषयं वर्जयित्वा अङ्गस्यापत्यानि बहूनि अङ्गाः
एवं वङ्गाः कलिङ्गाः सुह्माः रघोरपत्यानि बहूनि र
घवः वाताघत्ये इत्यण् तस्मानेनलुक तद्राजाना
मितिकिम् पूरोरपत्यानि बहूनि पौरवाः अण् ण
कारोहरिरादौ सतो इत्यर्थः आदिवृद्धिश्च उवर्ण
स्यावमार्थधेइति उवर्णस्य ओकारः बहुत्वेइतिकि
म् अङ्गस्यापत्यम् आङ्गः अस्त्रियामितिकिम् अङ्ग ।
स्यापत्यानि बह्व्यः स्त्रियः आङ्ग्यः अणेयेकादिति ईप्र
त्ययः ईकारेस्त्रीकृतेलोपइत्यकारलोपः जस् अप
त्यप्रत्ययस्येतिकिम् पञ्चालानामिमेशिष्याः पञ्चा
ला तस्येदमित्यण् **गर्गयस्कविदादीनां**
**च** गर्गादीनां यस्कादीनां विदादीनां च सम्बन्धि
नः अपत्यप्रत्ययस्य बहुत्वे उत्पन्नस्य लुग्भवति अ
स्त्रियांस्त्रीविषयं वर्जयित्वा गर्गस्यापत्यानि बहू ।
नि गर्गाः एवं वत्साः वज्राः सङ्कृतयः व्याघ्रपदा
पत्यानि बहूनि व्याघ्रपदाःयञ्गर्गादेरितियञ् ना ।

स्यानेनलुक यस्कस्यापत्यानिबहूनि यस्काः लह्याः
द्रुह्याः विदस्यापत्यानिबहूनि विदाः उर्वाः भरद्वा
जाः वाणापत्ये इत्यण् तस्यानेनलुक अपत्यप्रत्य
यस्येतिकिम् गर्गस्य इमेशिष्याः गार्गाः यास्काः
वैदाः बहुत्वेइतिकिम् गर्गस्यापत्यं गार्ग्यः यास्का
वैदः अस्त्रियामितिकिम् गर्गस्यापत्यानिबह्व्यः।
स्त्रियः गार्ग्यः यास्क्यः वैद्यः गर्गयाह्वात् एयगं
गादेरितिएपः एपादितिई प्रत्ययः यस्यापत्यस्यास्व
रपूर्वस्याधिन्यायिष्ठिति यलोपः षिद्भ्यःअण् अ
णेयेकादितिई प्रत्ययः गर्गवत्सवजसंकृतिव्याघ्र।
पात् अजविदभ्रदित्यादयोगर्गादयः यस्कलह्यद्रु
ह्य अयस्थूणबलन्दरइत्यादयोयस्कादयः विदउ
र्वभरद्वाजकर्वाण उपमन्युइत्यादयोविदादयः।

भृग्वत्र्याङ्गिरसकुत्सवसिष्ठगोतमेभ्यः।

अयम् भृगु अत्रि अङ्गिरस् कुत्स वसिष्ठ गो
तम एभ्यःपरस्यापत्यप्रत्ययस्य बहुत्वे उत्पन्नस्य
लुकभवति अस्त्रियांस्त्रीविषयंवर्जयित्वा भृगोर
पत्यानि बहूनि भृगवः अत्रयः अङ्गिरसः कुत्साः
वसिष्ठाः गोतमाः अस्यानेनलुक अत्रिशाह्वात् ॥
स्याम्यादेरेयण् अस्यअनेनलुक षिद्भ्यःवाण
पत्येतर अपत्यप्रत्ययस्येतिकिम् भृगोरिमेशिष्याः
भार्गवाः तस्येदमित्यण् बहुत्वेइतिकिम् भृगो
रपत्यमार्गवः एवम् आत्रेयः आङ्गिरसः कौत्सः।

वासिष्ठः गौतमः अस्त्रियामिति किम् भृगोरप।
त्यानि वत्स्यः स्त्रियः भार्गव्यः आत्रेय्यः आङ्गिरस्यः
कौत्स्यः वासिष्ठ्यः गौतम्यः अतो येकादिति ईङ्डत्व
यः ईकारे स्त्रीकृतेऽस्त्रोप्यः जस् **यतोऽपैति
भयमादत्ते वा तदपादानम्** यतः अ
पैति यस्माद्विश्लेषं प्राप्नोति यतो भयं यतश्चाद।
त्ते गृह्णाति तत्कारकं अपादानसंज्ञं भवति अ
पादाने पञ्चमी ग्रामादागच्छति अश्वात्पतितः चौ
रेभ्यो बिभेति अधर्मान्निवर्तते कोशागाराद्द्रव्यं।
गृह्णाति उपाध्यायाद्विद्यामादत्ते अपादानसंज्ञया
कः प्रयोजनम् योगाः कर्मकरणसंप्रदानापादान
स्वाम्याद्यधिकरणेषु स्वत्र वक्ष्यमाणाभिरत्रैव प्र।
योजनम् **ईप्सिते च रक्षार्थानाम्** र
क्षार्थानां रक्षाप्रयोजनानां धातूनां प्रयोगे सति य।
दीप्सितमभिप्रेतं तत्कारकमपादानसंज्ञं भवति।
चशब्दादनीप्सितमपि यवेभ्यो गां रक्षति तिले
भ्यः काकान्वारयति अनीप्सितं यथा अग्निभ्यः उ।
पानत्राति कपादन्यं वारयति **यस्मै दित्सा
रोचते धारयते वा तत्सम्प्रदानम्** यस्मै
दित्सा दातुमिच्छा यस्मै रोचते यस्मै च ऋणं धारय
ते तत्कारकं सम्प्रदानसंज्ञं भवति सम्प्रदाने चतुर्थी
विप्राय गां ददाति वैश्रवणाय बलिं प्रयच्छति देव
दत्ताय रोचते मोदकः यज्ञदत्ताय शतं [illegible] [illegible]दि

स्मादितिकिम् राज्ञोदंडंददाति **यआधारः**
**स्तदधिकरणम्** यआधारस्तत्कारकं अ
धिकरणसंज्ञंभवति अधिकरणेसप्तमी कटेआस्ते
पर्यंकेशेते जलेमत्स्याः वेशाक्रान्तघः दध्निघृतम्
तिलेषुतैलम् **येनक्रियतेतत्करणम्**
येनक्रियतेसाध्यते तत्कारकंकरणसंज्ञं
भवति करणेतृतीया दात्रेणलुनाति परशुनाछि
नत्ति **यत्क्रियतेतत्कर्म** यत्क्रि
यते क्रिययाविशिष्टंसंपाद्यते तत्कारकंकर्मसंज्ञं
भवति कर्मणिद्वितीयाकटंकरोति ओदनंपचति।
आदित्यंपश्यति **यःकरोतिसकर्ता** यः
करोतिक्रियांनिर्वर्तयति सकर्तृसंज्ञोभवति कर्तरि
तृतीया रुद्रेणत्रिपुरंदग्धम् विष्णुनाबद्धोबलिः क
र्तृसंज्ञयाकप्रयोजनम् कर्तरिचेत्यादिषु **का**
**रयितायःसहेतुश्च** यःकर्तारंकारयतिक्रि
यायांप्रेरयति सहेतुसंज्ञोभवति चकारात्कर्तृसंज्ञ
श्च कर्तरिप्रथमा कारयतिपाठयति हेतुसंज्ञयाक
प्रयोजनम् धातोश्चहेतावित्यादिषु **तेषांप**
**रत्रभयप्राप्तौ** तेषामपादानादीनांकारका
णांमध्यात् उभयोर्द्वयोः कारकयोः एकत्रप्राप्तौस
त्यांयत्परं तदेवकारकंभवति हर्तेन्यजतिदेवाःस्य
जतिदण्डंदण्डी अत्रपरत्वात्कर्मकर्तृकारकेभवतः
**प्रथमाविभक्तिर्लिङ्गार्थवचने** ।

लिंगार्थस्य वचने अभिधाने सति लिंगात्प्रथमा विभ
क्तिर्भवति वृक्षः कुमारी कुण्डम् द्रोणः आढक
म् ॥ आमन्त्रणे च ॥ आमन्त्रणादिके लिं
गार्थवचने सति प्रथमा विभक्तिर्भवति हे शिव हे
केशव ॥ शेषाः कर्मकरणसंप्रदाना
पादानस्वाम्याद्यधिकरणेषु ॥ शेषा
द्वितीयाद्या विभक्तयः कर्मणि करणे संप्रदाने अ
पादाने स्वाम्यादियोगे अधिकरणे च भवन्ति कर्म
णि द्वितीया कटं करोति करणे तृतीया परशुना छि
नत्ति संप्रदाने चतुर्थी विप्राय गां ददाति अपादा
ने पञ्चमी ग्रामादागच्छति अश्वात्पतितः स्वाम्या
दियोगे षष्ठी देवदत्तस्य स्वम् पितुः पुत्रः राज्ञो भा
र्या अधिकरणे सप्तमी कटे आस्ते पर्यङ्के शेते
॥ पर्यपाङ्योगे पञ्चमी ॥ परि अप आङ् इत्ये
तैर्योगे सति लिङ्गात्पञ्चमी भवति परि स्वर्गात् वृष्टो
देवः अपकाश्यकुब्जात् वृष्टो देवः आकुरुक्षेत्रात् वृष्टो देवः
॥ दिगितरर्तेऽन्यैश्च ॥ दिक् इतर ऋते अन्य इत्येतैश्च
योगे सति लिङ्गात्पञ्चमी भवति पूर्वो ग्रामात् द
क्षिणो नगरात् इतरो देवदत्तात्पण्डितः ऋते वि
ष्णोः कुतो मोक्षः अन्यो देवदत्तात् ॥ द्वितीयै
नेन ॥ एनप्रत्ययान्तेन शब्देन योगे सति लि
ङ्गाद्द्वितीया भवति उत्तरेण ग्रामं वसति दक्षिणेन
नगरं वसति पुरस्तादादयस्तेभ्य एनप्रत्ययः क

**र्मप्रवचनीयैश्च** प्रत्यायपकादयः कर्मप्रवचनीयाख्येश्रानुक्तास्तैर्योगे सति लिङ्गाद्द्वितीया भवति वृक्षमनु विद्योतते विद्युत् वृक्षं प्रति वृक्षमभि संप्रति साधुः **गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि** गत्यर्थानां धातूनां यत्कर्म तस्मिन्कर्मणि अनध्वनि अध्वशब्दवर्जिते द्वितीयाचतुर्थ्यौ भवतः चेष्टायां गम्यमानायां सत्यां चेष्टा कायपरिस्पन्दः ग्रामं गच्छति ग्रामाय गच्छति स्वर्गं व्रजति स्वर्गाय व्रजति तीर्थं याति तीर्थाय याति गत्यर्थग्रहणं किम् ओदनं पचति कर्मणीति किम् अश्वेन याति चेष्टायामिति किम् मनसा वाराणसीं गच्छति अनध्वनीति किम् अध्वानं गच्छति **मन्यकर्मण्यनादरेऽप्राणिनि** मनज्ञानेऽर्थस्य यत्कर्म तस्मिन्कर्मणि अप्राणिनि प्राणिवर्जिते द्वितीयाचतुर्थ्यौ भवतः अनादरे गम्यमाने अनादरस्तिरस्कारः तृणमपि त्वां न मन्ये तृणायापि त्वां न मन्ये बुसमपि त्वां न मन्ये बुसायापि त्वां न मन्ये मन्यग्रहणं किम् तृणं त्वां चिन्तयामि अनादरे इति किम् सुवर्णं त्वां मन्ये अप्राणिनीति किम् न त्वां काकं मन्ये न त्वा श्वानं मन्ये **नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च चतुर्थी** नमस्स्वस्तिस्वाहा स्वधा अलं वषट् इत्येतैर्योगे सति लिङ्गाच्चतुर्थी भवति नमो रुद्राय स्वस्ति प्रजाभ्यः स्वाहा अग्नये पितृभ्यः स्वधा अलम

श्रोमन्नाय वषट्कृताय तुमर्थाच्च भाववाचिनः तुमा समानार्थो यो भाववाची घञादिप्रत्ययः भाववाचिनश्चेत्यनेन क्रियायां क्रियार्थायां विहितस्तदन्तात् शब्दात् चतुर्थी भवति पाकाय व्रजति पक्तये व्रजति पचनाय व्रजति पक्तुं व्रजतीत्यर्थः तुमर्थादिति किम् पाकः पक्तिः पचनम् भाववाचिन इति किम् कर्त्ता कारको व्रजति कर्तुं व्रजतीत्यर्थः

तृतीया सहयोगे सहार्थेन शब्देन योगे सति लिङ्गात्तृतीया भवति पुत्रेण सहागतः पुत्रेण सहगोमान् पुत्रेण सत्रा पुत्रेण सार्द्धः हेत्वर्थे फलसाधनयोग्यः पदार्थो हेतुः हेत्वर्थे लिङ्गात्तृतीया भवति विद्यया यशः कन्यया शोकः धनेन कुलम् कुत्सितेऽङ्गे कुत्सितेऽङ्गे यदङ्गं तस्मिन्नङ्गे तृतीया भवति अक्ष्णा काणः नासिकया चिपिटः पादेन खञ्जः शिरसा खल्वाटः पाणिना कुणिः विशेषणे विशेष्यते उपलक्ष्यते येन तद्विशेषणं विशेषणेऽर्थे लिङ्गात्तृतीया भवति जटाभिस्तापसो दृष्टः दण्डेन भटो दृष्टः

कर्तरि च कर्त्रर्थे लिङ्गात्तृतीया भवति। रुद्रेण त्रिपुरं दग्धम् विष्णुना बद्धो बलिः कालभावयोः सप्तमी काले भावे च भावो धात्वर्थः तस्मिन्नर्थे लिङ्गात्सप्तमी भवति शरदि पुष्प्यन्ति सप्तच्छदाः वसन्ते पुष्प्यन्ति कुटजानि भावे यथा गोषु।

दोग्धेदुह्यमाने गतः गोषुदुह्यमानास्व आगतः
**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्र-
सूतैःषष्ठीच** स्वामिन् ईश्वर अधिपति दाया-
द साक्षिन् प्रतिभू प्रसूत इत्येतैर्योगेसतिलिङ्गात्
षष्ठीभवति सप्तमीच धनस्यस्वामी धनेस्वामी ध-
नस्यईश्वरः धनेईश्वरः धनस्यअधिपतिः धनेअधिप-
तिः धनस्यदायादः धनेदायादः धनस्यप्रतिभूः धने
प्रतिभूः गवांसाक्षी गोषुसाक्षी गवांप्रसूतः गोषु
प्रसूतः **निर्धारणेच** जातिगुणक्रिय-
यासंज्ञयावापृथक्कृतिः समुदायादेकदेशस्यनिर्धार-
णमितिस्मृतं येषांमध्यात्कस्यचिन्निर्धारणंपृथक्कर-
णंतेषांषष्ठीभवति सप्तमीच पुरुषाणांमध्येक्षत्रि-
यःशूरः पुरुषेषुवा गवांकृष्णागौः संपन्नक्षीरा गोषु
वा अध्वगानांमध्ये धावन्तःशीघ्रगाः अध्वगेषुवा छा-
त्राणांमध्येदेवदत्तःपाठकःछात्रेषुवा **ष-
ष्ठीहेतुप्रयोगे** हेतुशब्दप्रयोगेसतियोहेतुस्त-
स्यषष्ठीभवति हेतवेइतिन्नीयाग्रामा अन्नस्यहे-
तोर्वसति विद्यायाहेतोर्वसति **स्मृत्यर्थक-
र्मणि** स्मृतिरर्थोयेषांतेस्मृत्यर्थाः तेषांकर्म-
स्मृत्यर्थकर्मतस्मिन्कर्मणिषष्ठीभवति पितुःस्मर-
ति मातुःध्यायति विद्यायाश्चिन्तयति **करो-
तेःप्रतियत्ने** करोतेर्डुकृञ् करणे इत्यस्य-
कर्मतस्मिन्कर्मणिषष्ठीभवति प्रतियत्नेगम्यमानः

ने सतोगुणानांकरोत्याद्दनंप्रतियत्नः एधोदकस्योपस्का
रुते अग्निपत्रस्योपस्कुरुते **हिंसार्थानाम**
**ज्वरे** हिंसार्थानांधातूनांभावकर्मनामिकर्मणि
षष्ठीभवति अज्वरेः ज्वररोगेइत्यस्ययत्कर्मवर्जयि
त्वा चौरस्यरुजतिरोगः चौरस्यनदतिनोदः चौरा
स्यामयति आमयः अज्वरेइतिकिम् चौरंज्वरयति
ज्वरः **कर्तृकर्मणोःकृतिनित्यम्**
कृतिकृत्प्रत्ययान्तेधातौप्रयुज्यमाने सतिकर्तरि
कर्मणिचनित्यषष्ठीभवति भवतः आसिका भ
वतःशायिका भवतः अग्रगामिका पर्यायार्ह
र्णेष्वेतिविधीयोभावेण्वुल् अपुकामनाकान्ताः अ
त्रकर्तरिषष्ठी कर्मणियथा वज्रस्यभर्ता भुवनस्य
रक्षिता यवानांलावकः सक्तूनांपायकः **न**
**निष्ठादिषु** निष्ठादिषुकृत्प्रत्ययेषुप्रयुज्यमा
नेषुसत्सु कर्तृकर्मणोःषष्ठीनभवति पूर्ववत्प्रा
प्ता देवदत्तेनजितम् देवदत्तेनकटःकृतः देवद
त्तःकटंकृतवान् (निष्ठादुदन्तत्वान्तरु कन्यका
नानषानवः णिन्नाथमत्वेगम्यादिकयव्यापकर्म
रुकम् भुणुमर्थेखलर्थोवाहिषः पाकृतुजर्दनेः
भावेकर्माधिकरणोव्ययवन्यादितमरुत तव्यानी
ययकाराणांषष्ठीकर्मणिवाऽस्तना एकस्मिन्नुभ
योःप्राप्तौसत्यांनित्यंतकर्मणि **षष्ठीप्राप्ते**
मद्धाहृस्वान्तस्यहृषायस्केतिङत्वेकृतेरणे।

भवति नेनकारेपरे घस्राम् घस्रवतिः घस्रगदीने
इतिकिम् घद्भिः **मनोरनुस्वारो धुटि**
मकारनकारयोरनुस्वारो भवति धुटिपरे वंस्यते
हंसि धुटीतिकिम् गम्यते हन्यते **वर्गे व**
**र्गान्तः** मकारनकारयोः वर्गान्तो भवति ।
वर्गे धुटिपरे शान्तः शाङ्किता शमुउपशमे गत्य
र्थाकर्मकेतिक्तः पञ्चमोपधेत्युपधादीर्घः धुटी
तिकिम् चम्नाति हन्ति चमु अदने हनहिंसागत्योः
वर्तमानातिमि अःस्वादेःयुगः **तवर्गश्च**
**टवर्गयोगे चटवर्गौ** तवर्गश्चटवर्गाभ्यां
योगे भवति यथासंख्यं चटवर्गावादेशौ भवतः राज्ञः श्च्युतिः ।
याज्ञा अश्च पाके इत्यादौ याज्ञायाम् याचिविच्छिप्रच्छीति
नङ् टवर्गयोगे ईड्ढे ईडुस्तुतौ ईड्याम् ईडस्ते वर्तमानाते
अन्ति अदादेर्लुक् अचोवेष्वाश्लिगमितिउत्पदः अनुनासि
कयोः अन्विष्य नेन दष्टः **नामिकरपर.**
**प्रत्ययविकारागमस्थः सिः षं नुविसर्जनीय**
**षान्तरोऽपि** नामिनः ककाराद् रेफाच्च
परः सकारः प्रत्ययस्थो विकारस्थ आगमस्थश्च ष
त्वमापद्यते नुविसर्जनीयषान्तरोऽपि नुकारागमे
नविसर्जनीये नषकारेण व्यवहितोऽपीत्यर्थः ना
मिनः अग्निषु वायुषु कात् वाक्षु त्वक्षु रेफात् गी
र्षु धूर्षु इतिप्रत्ययस्थः पयः इति विकारस्थः सर्वे
षाम् इत्यागमस्थः नुविसर्जनीयषान्तरोऽपि यथा

सर्पींषि सर्पिःषु नामिन इति किम् असौ **रषृव**
**र्णेभ्यो नो णमनन्त्यः स्वरहयवकवर्गपव**
**र्गान्तरोऽपि** रेफषकारऋवर्णेभ्यः परो नका
रः अनन्त्यः अपदान्तो णकारमापद्यते स्वरहयव
कवर्गपवर्गान्तरोऽपि स्वरेण हकारेण यकारेण वका
रेण कवर्गेण पवर्गेण च व्यवहितोऽपीत्यर्थः रेफात्
चतुर्णाम् षात् षण्णाम् ऋवर्णात् नृणां वा नृणा
म् स्वरहयवकवर्गपवर्गैः केवलैः समुदितैश्च व्यव
हितो यथा हरेण भूरुषेण चर्हेण आर्येण गर्वेण ।
अर्केण मूर्खेण सर्गेण अर्घेण सर्पेण रेफेण दर्भे
ण धर्मेण रषृवर्णेभ्य इति किम् धनम् अनन्त्य इति
किम् नरान् हरान् पितॄन् **स्त्रियामा**
**दाप्** आत् अकारान्तात् लिङ्गात् स्त्रियां वर्त
मानात् आप् प्रत्ययो भवति पकारः स्वरार्थः देवद
त्ता या सा का स्त्रियामिति किम् कीलालपाः आ
दिति किम् मतिः **नद्याद्यञ्च्वाहुवस्नत्रृ**
**सखिनान्तेभ्य ई** नद्यादिभ्यः षाड्भ्यः तथा
अञ्च् वाह् उ वस् अत् ऋ सखि नान्त एभ्यः स्त्रि
यां वर्तमानेभ्यः ई प्रत्ययो भवति नद्यादिभ्यस्तावत् ।
नदी मही गौरी अञ्च् प्राची प्रतीची तिरश्ची उदीची
वाह् पष्ठौही तुर्यौही उ पट्वी मृद्वी वस् पेचुषी वि
दुषी अत् पचन्ती दीव्यन्ती ऋ कर्त्री हर्त्री सखि सखी
नान्त दण्डिनी पद्मिनी एभ्यः षाड्भ्यः स्त्रियामी प्रत्ययो

दृश्यन्ते तेन दादयः ईकारे स्त्रीकृतेऽलोप्यः

स्त्रियांकृते ईकारे परे अकारो लोपनीयो भवति दे
वी गौरी मही अनेन अकारलोपः स्त्रीकृत इति किम्।
कृते स्वरो ह्रस्वो नपुंसके नपुंसकवि
षये वर्त्तमानः स्वरस्य ह्रस्वो भवति सेनानि कुलम्।
यवलु कुलम् नपुंसके इति किम् ग्रामणीः ना गौः।
इति लिङ्गत्रैनामप्रकरणोकारकप्र
दश्वमर्थः। अथ नाम्नां समासो युक्तार्थः

नामसंज्ञालिङ्गस्य विभक्त्यन्तस्योक्तवन्तः अ
ष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः तन्नामकवयः प्राहु
र्भेदे वचनलिङ्गयोः नाम्नां समासः समसनं पृथक्स्थि
तानामेकीभावो भवति यदि पूर्वपदोत्तरपदानां यु
क्तार्थः परस्परं संबद्धार्थो भवति नीलं च उत्पलं नी
लोत्पलम् राज्ञः पुरुषः राजपुरुषः युक्तार्थ इति कि
म् वस्त्रं नीलम् उत्पलं वर्षा पश्यति भार्या राज्ञः पु
रुषो देवदत्तस्य तत्स्था लोप्या विभक्तयः

तत्र समासार्थवाक्ये याः स्थिता विभक्तयस्ता लो
प्या भवन्ति राज्ञः पुरुषः राजपुरुषः इति षष्ठीतत्पुरु
षः शष्कुल्याखण्डः शष्कुलाखण्डः यूपाय दारु यू
पदारु वृकेभ्यो भयं वृकभयम् लोप्या इत्यदेशात्य
निर्देशादन्यस्यापि लोपादेशः यथादर्शनं लोपः दे
वस्वमिवस्वं यस्य सः देवस्वः हतपूर्णो घटः।
हतघटः अविद्यमानं पापं यस्य सः अपापः अत्रत्य।

त्वपूर्णोविद्यमानानांप्राप्तानांलोपः प्रकृतिश्च स्वरान्तस्य स्वरान्तस्यप्रातिपदिकस्यसमासेविभक्ति लोपेचकृतेप्रकृतिर्यथास्वरूपंभवति प्रत्ययलोपे प्रत्ययलक्षणमिति वचनाद्यत्प्राप्तं तन्नभवति पितरिनिपुणः पितृनिपुणः अत्रप्राप्तौविति अत्रप्राप्तः सखायंप्राप्तः सखिप्राप्तः अत्रद्विठिते इतिएत्वं प्राप्तम् व्यञ्जनान्तस्ययत्सुभोः व्यञ्जनान्तस्यप्रातिपदिकस्यप्रत्ययेभकारेचपरेयत्कार्यं प्राप्तंतत्समासेविभक्तिलोपेचकृतेभवति विदुषः अर्थः विद्वदर्थः अत्रनलोपोदत्वंचभवति राज्ञः अर्थः राजार्थः अत्रनलोपः दिवंगतः द्युगतः अत्रउत्वम् । पयसामाश्रयः पयआश्रयः अत्रसुलम् पदेतुल्याधिकरणोविज्ञेयःकर्मधारयः यत्रसमासेतुल्याधिकरणपदद्वयादिकं उत्तरपदे परे पूर्वपदंसमस्यते ससमासः कर्मधारयसंज्ञो विज्ञातव्यः ब्राह्मणीचासौदारिका ब्राह्मणदारिका कर्मधारयसंज्ञेनपुंवद्भावोविधीयते इतिपूर्वपदस्यपुंवद्भावः तुल्याधिकरणेइतिकिम् कल्याण्या दुहिता कल्याणीदुहिता कर्मधारयसंज्ञायाअप्रयोजनम् कर्मधारयसंज्ञेनपुंवद्भावोविधीयतेइत्यत्र।

सङ्ख्यापूर्वोद्विगुरितिज्ञेयः सङ्ख्यापूर्वःसमासः द्विगुसंज्ञोज्ञेयःज्ञातव्यः तद्धितानां ये अर्थास्तेषुसत्सु उत्तरपदेपरेसमाहारेचाभिधेये।

यो द्विगुरिष्यते तद्धितार्थे प्रस्तावात् पञ्चसु कपालेषु सं
स्कृतः पुरोडाशः पञ्चकपालः अत्र संस्कृतेऽर्थे एव
मादेशाविष्यते इत्यण् तस्य द्विगोर्लुगनपत्ये इति।
तत्तद्धितलुक् उत्तरपदे पञ्चगावो धनं यस्य सः प
ञ्चगवधनः अत्र धनशब्दे उत्तरपदे पञ्चगव इति।
द्विगुः समासान्तगतेति गोशब्दादकारः समासान्त
पञ्चानां गवां समाहारः पञ्चगवम् पूर्ववदकारः।
समासान्तः पञ्चानां नदीनां समाहारः पञ्चनदम्
संख्यायानदीगोदावर्योरिति नदीशब्दादकारः समा
सान्तः इवर्णावर्णयोरिति ईकारलोपः द्विगुसंज्ञ ।
याः प्रयोजनम् द्विगोरित्यत्र **तत्पुरुषा**
**वुभौ** उभौ कर्मधारयः द्विगुश्च तत्पुरुषौ भव
तः कुत्सितश्चासावश्वः कदश्वः एवं कदर्थः कर्मधा
रयस्तत्पुरुषत्वात् कोः कत् इति कत् आदेशः पञ्चा
नां गवां समाहारः पञ्चगवम् द्विगुसमासस्य त
त्पुरुषत्वाद्गोरतद्धितलुकीति टच् समासान्तः स
खिराजशब्दाभ्यां तत्पुरुष एव स्मर्यते पञ्चानां राज्ञां
समाहारः पञ्चराजी द्विगोरिति ईप्रत्ययः ईकारे।
ङीकृते लोप्य इत्यकारलोपः **विभक्तयो**
**द्वितीयाद्यान्नाम्नापरपदेन तु समस्य।**
**न्ते समासोऽयं तत्पुरुषः स च** यत्र
समासे द्वितीयाद्या विभक्तयो द्वितीयादिविभक्त्यन्ता
नि पदानि परपदेन नाम्ना समस्यन्ते स समासस्त।

त्तत्पुरुषसंज्ञोज्ञेयः ज्ञानज्ञः धर्मश्रितः धर्माश्रितः शंकु
लखण्डः शङ्कुलाखण्डः यूपायदारु यूपदारु ह
केभ्योभयं वृकभयम् राज्ञःपुरुषः राजपुरुषः अ
क्षैर्शौण्डः अक्षशौण्डः परपदेनेतिकिम् गतो।
ग्रामम् तत्पुरुषसंज्ञयाकिम्प्रयोजनम् तस्यतत्पुरु
षलोपइत्यत्र स्यातांयदिपदेद्वेयदि
वास्युर्बहूनयपि तान्यन्यस्यपदस्यार्थेबहु
व्रीहिः यत्रसमासेद्वेपदेस्यातां यदिवाबहू
निपदानिस्युः तानिपदानि अन्यस्यपदस्यार्थेवाच्ये।
सतिसमस्यन्ते ससमासोबहुव्रीहिसंज्ञोभवति द
ऐश्च दौश्चयष्टुई नदाणादशि इक्कसमतिद्वारेइ
तिरच् समासान्तः आकारोमहतः कार्यइतिकार्यग्र
हणादाकारः इवर्णावर्णलोपः अभयमेतत् अव्य
याश्चेतिसिलोपः आरूढोवानरोयंवृक्षं आरूढ
वानरोवृक्षः सहपुत्रेणवर्ततेयःसः सपुत्रः सहभा
र्ययावर्ततेयः सः सभार्यः ङ्गिरीसहपूर्वइतिज्ञापका
त्सहस्याह्रस्वभावः गोस्त्रियोरुपसर्जनस्येति उत्तर
पदस्यह्रस्वः कृतउपकारोयेनसकृतोपकारः रोचि
तोमोदकोयस्मैसरोचितमोदकः उद्धृतओदनोयस्याः
सा उद्धृतौदनास्थाली चित्रागावोयस्यसचित्रगुः श्वे
तकाष्ठितंस्काइतिचित्राशब्दस्यह्रस्वः शुद्धंजलंय
स्याःसाशुद्धजलानदी आसन्नादशानोयेनेआसन्नद
शाःपंचे आसन्नाविंशाः आसन्नविंशाः बहुव्रीहौसंख्येयेडज ब।

ङ्गणादितिरव् समासान्तः अत्रवन्येष्वस्वरादेर्लोपः
बहूनिपदानियथा मत्तावहवोमातङ्गायत्रतत् म
त्तबहुमातङ्गंवनम् बहुव्रीहिसंज्ञयाकप्रयोजनम्
बहुव्रीहौचेत्यत्र **विदिक्तथा** विदिगत्र
अन्यपदार्थास्तसमासोबहुव्रीहिसंज्ञोभवति दक्षि
णस्याश्चपूर्वस्याश्चदिशोर्यदन्तरालंविदिक्सादक्षिण
पूर्वा एवं उत्तरपूर्वा पूर्वोत्तरा पूर्वदक्षिणा दक्षिण
पश्चिमाइत्याद्याउपादार्योः सर्वनाम्नोवृत्तिमात्रे इति
पूर्वपदानांपुंवद्भावः **द्वन्द्वः समुच्चयोना**
**म्नोर्बहूनांवापियोभवेत्** एकस्यांक्रिया
यामनेककर्मादिसंबन्धः समुच्चयः यत्रसमासेद्व
योर्नाम्नोः बहूनांवानाम्नांसमुच्चयः ससमासोद्वन्द्व
संज्ञोभवति सद्वयोरर्थयोर्विधाने समाहारे इतरेत
रयोगेच यत्रसमूहप्राधान्यंससमाहारः यत्रपृथ
क्त्वानांपदार्थानांप्राधान्यंसइतरेतरयोगः पदा
र्थानांनित्यसंयोगोवा तत्रप्राणयङ्गः प्राण्यङ्गानांसेना
ङ्गानांतूर्याङ्गानां येषांमाहिरहितेचाधीवंदृश्यतेतेषां।
तद्वजन्तूनांचसमूहेनैवास्थितिर्दर्शनात्समाहारएव।
द्वन्द्वोभवति पाणीचपादौचतत्पाणिपादम् शिरोग्री
वम् अङ्गेन इतिप्राण्यङ्गानाम् तूर्याङ्गानांयथामार्द
ङ्गिकपाणविकम् वांशिकवैणविकम् सेनाङ्गानांय
था हस्त्यश्वम् रथिकाश्वारोहम् क्षुद्रजन्तूनांयथा यू
कालिक्षम् दंशमशकम् अप्राणिनामपिफलादीनांप्रा

णः समूहः इति त्वात् समाहार एव बदरामलकम्
आरामाश्व रथोष्ट्र श्वानशृगालके इति द्वन्द्वः प्राणि
नां तूर्य गृहीत्वादि नरेतर योगएव ब्राह्मणक्ष
त्रियौ नित्य वैरिणां तु परस्पर विरोधात् समूहत्व
नित्वाभावेऽपि समाहार एव येषां चाविरोधः शाश्व
तिक इति तन्त्रान्तरात् अहिनकुलम् मूषिकमा
र्जारम् विडालोन्दुरु एवमन्यत्रापि लक्ष्यानुसारे
ण समाहारे इतरेतरयोगे द्वन्द्वसमासो ज्ञेयः

**अल्पस्वरतरं तत्र पूर्वम्** तत्र द्व
न्द्वे यदल्पस्वरतरं तत्पूर्वमेव प्रयोज्यम् यथा ख
दिरौ न्यग्रोधौ नकुलकिणे उलूखलमु
सले इत्यादौ पूर्वं निपातः अर्चितत्वात् तरयद्
णाश्वतरस्य पूर्वनिपातः कुशकाशम् अग्नि
संज्ञकस्य पूर्वनिपातः द्वन्द्वे घि इति तन्त्रान्तरात् अ
ग्नीषोमौ ईदग्नेः सोमवरुणयोरिति तन्त्रान्तरात् ई
त्वम् अग्नेः स्तुत्स्तोमसोमाः इति षत्वम् **प
वार्चितं द्वयोः** द्वयोः नाम्नोः द्वन्द्वे यदर्चि
तं पूजितं तत्पूर्वमेव प्रयोज्यम् वासुदेवार्जुनौ मा
तापितरौ पितापुत्रौ आनङ् ऋतो द्वन्द्वे इति पूर्वपदान्त
ऋकारस्यानङ् ब्राह्मणक्षत्रियौ सूर्याचन्द्रमसौ
देवताद्वन्द्वे चेति पूर्वपदस्यानङ् जायापती भार्या
पती अत्रापि पतिजायेति प्राप्ते तिरश्चीभूत्वे जा
यते जायाया स्त्रीहिजायायांवै यदस्यां जायते पुनः।

रितिस्मरणाज्ञायायाश्चितत्वम् यथाह्याज्ञाचिद
नचितस्यापिपूर्वनिपातः चन्द्रार्कौ शुक्लकृष्णसती
कालकामौ काकमयूरौ शत्रुमित्रे इत्यादि द्वयोरि
तिकिम् सर्वश्चरान्त्यान्तवालिसउग्रसङ्कर्ष
णावासुदेवाइति पूर्ववाच्यंभवेयस्य सोऽव्ययीभाव
इष्यते यस्यसमासस्यपूर्वं पूर्वपदार्थो वाच्यश्चधा।
नंभवेत् ससमासः अव्ययीभावसंज्ञइष्यते समी
पंकृष्णस्य उपकृष्णम् सद्भिःकर्तृणांस्वकार्दे।
अभावःपापानाम् अपापम् अत्ययःशीतानाम्।
अतिशीतम् पश्चाद्रथस्य अनुरथम् विधिमन।
तिक्रम्ययथाविधि स्थानेस्थानेयथास्थानम् यो
ग्यःस्वयथास्वम् येनयेनप्रकारेणयथायथम् इ
तिनिपातनात् आकारस्यह्रस्वः अव्ययीभावसंज्ञा।
याःप्रयोजनम् अव्ययीभावादकारान्ताद्विभक्ती
नाममपञ्चम्याइत्यादिश्च **सनपुंसकलि**
**ङ्गःस्यात्** सोऽव्ययीभावसमासोनपुंसकलि
ङ्गोभवति उक्तान्युदाहरणानि उपकृष्णमित्यादी
नि **द्वन्द्वैकत्वम्** द्वन्द्वस्ययदेकत्वंस।
माहारस्तत् नपुंसकलिङ्गंभवति पाणिपादम् ब
दरामलकम् **नद्याद्विगोः** द्विगोःस
मासस्यनपुंसकत्वंभवति नद्याअनेनैवप्रकारेणये
नैवद्वन्द्वस्येत्यर्थः पञ्चानांनदीनांसमाहारः पञ्च
नदम् दशानांगवांसमाहारः दशगवम् सङ्ख्या।

याम्नदीगोदावर्योः गोरतद्धितलुकीति च आकारः ।
समासान्तः समाहारादन्यत्रयोद्विगुस्तस्य न भवति पंचसुकपालेषुसंस्कृतःपुरोडाशःपञ्चकपालः

**पुंवद्भाषितपुंस्कादनूङ् पूरण्यादिषु स्त्रियांतुल्याधिकरणे**

भाषितपुंस्काया स्त्रीविशेषणे स्त्रीलिङ्गे अनूङ् ऊङ्प्रत्ययरहिते । सा स्त्रीलिङ्गे पूरण्यादिवर्जिते तुल्याधिकरणे एकद्रव्यविषये उत्तरपदे परे पुंवद्भवति पुंसि यद्रूपं तदापद्यते इत्यर्थः दर्शनीया भार्या यस्य स दर्शनीयभार्यः उत्तरपदस्य गोस्त्रियोरुपसर्जनेति ह्रस्वः कल्याणी भार्या यस्य स कल्याणभार्यः एवंसुरूपभार्यः । भाषितपुंस्केति किम् खट्वाभार्या यस्य स खट्वाभार्यः स्त्रीलिङ्गनिर्देशः किम् अतिरिकुलंगतिर्यस्य सः अतिरिगतिः अतिजुजलंगतिर्यस्य सः अतिजुगतिः पुंवद्भावेन ह्रस्वनिवृत्तिःस्यात् अनूङ् इति किम् ब्रह्मबन्धूः भार्या यस्य स ब्रह्मबन्धूभार्यः ब्रह्मबन्धुशब्दात् ऊङुत इत्यूङ् ऊकार इत्यर्थः अपूरण्यादिष्विति। किम् कल्याणीपञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः अप्पूरणीप्रमाण्योरित्यप् समासान्तः इवर्णावर्णलोपः स्त्रियामिति किम् कल्याणीप्रधानं यासां ताः कल्याणीप्रधानाः तुल्याधिकरणे इति किम् । कल्याण्यादुहिता कल्याणीदुहिता

**संज्ञापूरणीकोपधात्तु न**

संज्ञाभूतापूरणाश्च ।

यथान्तककारोपधाचभाषितपुंस्कात्पुंवन्नभवति ।
स्त्रीलिङ्गेतुल्याधिकरणेपदे पूर्वेणप्राप्तिः दत्ताभार्या
यस्य सदत्ताभार्यः पाचिकाभार्यः पञ्चमीभार्यः ना
गरिकाभार्यः गाथिकाभार्यः नर्तकीभार्यः **क**
**र्मधारयसंज्ञेतुपुंवद्भावोविधीयते** **सं**
ज्ञापूरणीकोपधानांकर्मधारयसंज्ञेसमासे तुल्या
धिकरणेस्त्रीलिङ्गेपूरण्यादिवर्जिते उत्तरपदेपरेपुं
वद्भावोविधीयते पूर्वेणनिषेधःप्राप्तः दत्ताचासौवृ
न्दारिका दत्तवृन्दारिका पञ्चमवृन्दारिका **आ**
**कारोमहतःकार्यस्तुल्याधिकरणेपदे**
महदित्यस्यआकारः कार्यः तुल्याधिकरणेपदेपरे
महांश्चासौदेवः महादेवः महान्कायो यस्यसमहा
कायः तुल्याधिकरणइतिकिम् महतःपुत्रो महत्पुत्रः
कार्यग्रहणादन्यत्रापि पूर्वपदस्यात्वंभवति द्वौऽश्च द
शेश्चयथासंख्यंतदष्टादशि पितामहो एकादश
**नस्यनञःसमासेलोपः** नञ्पदस्यनस्यसमासे
प्रसिद्धस्य उत्तरपदेपरेनकारस्यलोपोभवति नब्रा
ह्मणः अब्राह्मणः नप्रबलः अप्रबलः पदस्येतिकि
म् वामनञ्जः **स्वरेतरविपर्ययः** **अ**
तरयोर्विपर्ययः अतरविपर्ययः नञ्पदस्य अत
रविपर्ययोभवति स्वरेपरे नअश्वः अनश्वः नउष्ट्रः ।
अनुष्ट्रः **कोःकत्** कुशब्दस्य तत्पुरुषे
प्रसिद्धस्यकत् आदेशोभवति स्वरेपरे कदश्वः ।

साक्षः कदक्षः तत्पुरुषे इति किम् कुत्सितकृष्णा।
अतेऽयस्य सकृष्णाऽदः      का ईषदर्थे
ईषदर्थे वर्तमानस्य कुशब्दस्य का आदेशो भवति ई
षन्मधुरम् कामधुरम् एवं कालवणं काम्लम् ई
षदर्थे इति किम् कुत्सितो देशः कुदेशः      अ
त्रे      अक्षशब्दे उत्तरपदे परे कुशब्दस्य का आदे।
शो भवति अनीषदर्थं वचनम् कुत्सितः अक्षः का।
क्षः      पुरुषे तु विभाषया      कुशब्दस्य पुरु
षशब्दे परे का आदेशो भवति विभाषया विकल्पेन कु
त्सितः पुरुषः कापुरुषः कुपुरुषो वा याकारौ स्त्री।
कृतौ ह्रस्वौ क्वचित्      स्त्रियां कृतौ स्त्रीकृतौ
ईकाराकारौ उत्तरपदे परे ह्रस्वौ भवतः क्वचित्
न सर्वत्र रेवतीमित्रः रोहिणीदत्तः इष्टका इषीका
माला एषां यथासंख्येन चिततूलभारिन् एषु उत्तरपा
देषु परेषु अन्त्यस्य ह्रस्वो भवति इष्टकेषीकामाला
नां चिततूलभारिषु इति तन्त्रान्तरात् इष्टकाभिश्चि
तम् इष्टकचितम् इषीकायास्तूलं इषीकतूलम्
मालां बिभर्तीति मालभारिणी कन्या क्वचिदिति
वचनात् इह न भवति लक्ष्मीनरानन्दीकृत्या
ह्रस्वस्य दीर्घता      ह्रस्वस्य क्वचिद्दीर्घता भव।
ति दीर्घो भवतीत्यर्थः अष्टसु कपालेषु संस्कृतः अ
ष्टोऽगशः अष्टाकपालः अङ्गुलीकर्णौ यस्य सः अङ्गु
लीकर्णः एवं द्विगुणाकर्णः क्वचिदिति वचनादि

त्वं न भवति छिन्नकर्णः भिन्नकर्णः स्रुवकर्णः स्व
स्तिककर्णः **अनव्ययविसृष्टस्तु सका
रं कपवर्गयोः** अनव्ययसम्बन्धी विसृष्टो विसर्जनीयः।
कपवर्गयोः परयोः क्वचित्सकारमापद्यते जिह्वामूली
योपध्मानीययोर्बाधः अवग्रहपदस्यादकार। अयस्वि
सर्जनीयस्य कृकमिकंसकुम्भपात्रकुशाकर्णीष्वपरेषु
समासे सति: अतः कृकमिकंसकुम्भपात्र कु।
शाकर्णी ष्वनव्ययस्येति तन्त्रान्तरात् कृ ॥।
अयस्कारः कमि अयस्कामः कंस अयस्कंसः कु
म्भ अयस्कुम्भः पात्र अयस्पात्रम् कुशा अयस्कु।
शा कर्णी अयस्कर्णः उत्तरपदस्थादकारान्तर।
स्य विसर्जनीयस्य न भवति उपयशः कामः आका।
शादपि परस्य क्वचिन्नेष्यते भास्करः कपवर्गयोरि
ति किं च यकापवरस्थाने तेनेह न भवति अयोयनः
प्रयोविन्दुः अनव्ययविसृष्ट इति किम् स्वःकामः।
अन्तःकामः **इति लघुवृत्तौ नामचतु
ष्टये समासपादः पञ्चमः ५ ओंवाणप
दे।** अपत्येर्थे लिङ्गादण् प्रत्ययो वा भवति उ
पगोरपत्यम् औपगवः उपगुशब्दादण् णकारो।
वृद्धिमादौ सणिति इत्यर्थः आदिवृद्धिः उवर्णस्त्वोत्वमा
पाद्य इति ओत्वम् पक्षे उपगोरपत्यम् उपगवपत्यमि
ति समासवाक्ये भवतः संख्यासंभद्रपूर्वाया मातु।
रणि परे ऋकारस्य उरादेशो भवति मातृमतः।
संख्यासंभद्रपूर्वा या इति तन्त्रान्तरात् षाण्मातुरः।

सौमात्रः भाद्रमातुरः कन्यायाश्चाणिपरे कनीनादे।
शः कानीनो व्यासः कानीनः कर्णः यण्गा।
र्गादेः गर्गादेर्गणादपत्येऽर्थे यण्प्रत्ययो भव
ति गर्गस्यापत्यं गार्ग्यः वात्स्यः पक्षे गर्गस्यापत्यंग
र्गापत्यमिति पौत्रादावपत्ये प्रत्ययो यं स्मर्यते तेनग
र्गस्य पुत्रो गार्गिः इस्मत इनिः इञ् पत्यन्ताच्च
प्रजापत्योरपत्यं प्राजापत्यः गार्हस्पत्यः दि
त्यदित्योरेयण्वा दैत्यः दैत्येयः आदित्यः आदित्येयः
गर्गवत्सवज्रसङ्कृतिव्याघ्रपात् शाण्डिल्यशङ्कलवि
दभृदित्यादयो गर्गादयः कुञ्जादेरायन।
ण्स्वतः कुञ्जादेर्गणात् अपत्येऽर्थे आयनण्
प्रत्ययो भवति तदन्तात् स्वार्थे ण्यप्रत्यय इष्यते स
च स्त्रियां बहुत्वे नेष्यते कौञ्जायन्यः कौञ्जायन्यौ।
कौञ्जायनाः कौञ्जायनी ब्राध्नायन्यः ब्राध्नायन्यौ ब्रा
ध्नायनाः ब्राध्नायनी जाते र्योपधादिति ईप्रत्ययः
कुञ्जब्रध्नशणनक्षचरलिपुलोदक्षइत्यादयः कुञ्जादयः
स्त्र्यादेरेयण् स्त्रीप्रत्ययान्तेभ्यः।
अत्र्यादिभ्यश्च अपत्येऽर्थे एयण्प्रत्ययो भवति सुप
र्ण्या अपत्यं सौपर्णेयः वैनतेयः गाङ्गेयः नद्याश्च
पत्यं नादेयः एवं माद्रेयः रौहिणेयः अत्र्यादिभ्यः।
आत्रेयः नैधेयः पितृष्वसृमातृष्वसृभ्यामेयण्ई
यणौ भवतस्तेषु णिवान्तलोपश्च पितृष्वसुरपत्यं पैतृष्वसेयः
पैतृष्वसीयः पैतृष्वसेयः मातृष्वसेयः मातृष्वसीयः मातृष्व

नेयः कल्याण्यादीनामेयणि परे अन्त्यस्य इनादेशो
भवति कल्याण्यादीनामिनङिति नन्त्वान्तरात् क
ल्याण्या अपत्यं काल्याणिनेयः सुभगाया अपत्यं सौ
भागिनेयः हृद्भगसिन्ध्वन्ते पूर्वपदस्येति नन्त्वान्तरा
दुभयपदवृद्धिः अग्नीनियिश्च विष्टिमत्काण्डकौ
किलासइत्याद्या अश्वादयः **इञ्मतः**
अतः अकारान्तात् लिङ्गात् अपत्येर्थे इण्प्रत्ययो भ
वति दत्तस्यापत्यं दात्तिः ज्ञातिः **बाह्वादे**
**श्चाभिधीयते** बाह्वादेर्गणादपत्येर्थे इण्भ
वति बाहोरपत्यं बाहविः औपबाकविः औपबिन्दु
विः बालाकिः सौमित्रिः औडुलोमिः शारलोमिः पौ
ष्करसादिः उडुलोमन् शारलोमन् इत्येतयोः नस्य
तद्धिते इति नलोपः पुष्करसद् शब्दस्य अनुशाति
कादीनां चेत्युभयपदवृद्धिः आङ्गिः देवशर्मिः सु
धातृव्यासवरुटनिषादचण्डालबिम्बानामिनि परे
अन्त्यस्य अकआदेशः इष्यते सुधातुरपत्यं सौधातकिः
वैयासकिः य्वोर्हेद्विरागम इति यकारात्पूर्वमै +
+ कारागमः वारुटकिः नैषादकिः चाण्डाल
किः बैम्बकिः बाहु उपबाकु उपबिन्दु बालाका सुमि
त्रा उडुलोमन् शारलोमन् पुष्करसद् अङ्गदेवश
र्मन् इत्यादयो बाह्वादयः **रागात्** रा
ज्यते येन स रागः रागवाचिनः शब्दात् अण् भवति।
तेन रक्तमित्यर्थे काषायेण रक्तं काषायम् कौ

रम्भम् कौङ्कुमम् हारितालम्   **नक्षत्रयोगाच्च**
नक्षत्रेण योगे सम्बन्धे नक्ष
त्रयोगात् अण् भवति पुष्येण युक्ता पौर्णमासी
पौषी तैषी तिष्यपुष्ययोर्नक्षत्राणीति तद्धितान्त
त् यलोपः सा पौर्णमासी यस्य मासस्य स पौषः ते
षः मासि पौर्णमासीति संज्ञायामिति ईप्रत्ययान्ता
द् अण् इवर्णावर्णलोपः एवं मघाभिर्युक्ता पौर्णमा
सी माघी सा यस्य मासस्य स माघः फाल्गुनीभिर्यु
क्ता पौर्णमासी फाल्गुनी सा यस्य मासस्य स फाल्गु
नः चित्रया युक्ता पौर्णमासी चैत्री सा यस्य मासस्य
स चैत्रः विशाखया युक्ता पौर्णमासी वैशाखी सा
यस्य मासस्य स वैशाखः ज्येष्ठया युक्ता पौर्णमासी
ज्यैष्ठी सा यस्य मासस्य स ज्यैष्ठः आषाढाभिर्युक्ता पौ
र्णमासी आषाढी सा यस्य मासस्य स आषाढः श्र
वणेन युक्ता पौर्णमासी श्रावणी सा यस्य मासस्य स
श्रावणः भद्रपदाभिर्युक्ता पौर्णमासी भाद्रपदी सा
यस्य मासस्य स भाद्रपदः अश्वयुग्भ्यां युक्ता पौर्णमा
सी आश्वयुजी सा यस्य मासस्य स आश्वयुजः कृत्ति
काभिर्युक्ता पौर्णमासी कार्त्तिकी सा यस्य मासस्य स
कार्त्तिकः मृगशीर्षेण युक्ता पौर्णमासी मार्गशीर्षी
सा यस्य मासस्य स मार्गशीर्षः   **समूहात्**
समूहेऽर्थे लिङ्गात् अण् भवति कपोतानां
समूहः कापोतम् पौकम् मायूरम् तैत्तिरीणां स

मूहः तैत्तिरम् गर्भिणीनां समूहः गार्भिणम् इ
वर्णावर्णलोपः   **सास्यदेवता**   लिङ्गा
त् साऽस्य देवता इत्यत्रार्थे अण् भवति शिवो देव
ताऽस्य शैवः विष्णुर्देवता यस्य स वैष्णवः एवं बौ
द्धः   **तद्वेत्त्यधीते**   लिङ्गात् तद्वेत्ति त
दधीते इत्यत्रार्थे अण् भवति छन्दो वेत्त्यधीते वा छा
न्दसः व्याकरणं वेत्त्यधीते वा वैयाकरणः य्वोर्हि
तताम् इति यकारात्पूर्वमैकारागमः   **तस्ये
दम्**   लिङ्गात् तस्येदमित्यत्रार्थे अण् भवति
भर्गस्येदं भार्गवम् वेणोरयं वैणवो दण्डः   **प्र
भवादेरणिष्यते**   एवमादावित्यत्रार्थे अ
ण् भवति तत्र भवः स्रुघ्ने भवः स्रौघ्नः एवं कान्य
कुब्जः मथुरायां भवः माथुरः तत आगतः स्रुघ्ना
दागतः स्रौघ्नः तत्र जातः स्रुघ्ने जातः स्रौघ्नः
**तेन दीव्यति**   लिङ्गात्तेन दीव्यतीत्यत्रार्थे इक
ण् भवति तेन दीव्यति अक्षैर्दीव्यति आक्षिकः श
लाकाभिर्दीव्यति शालाकिकः   **संसृष्टम्**
तेन संसृष्टमित्यत्रार्थे इकण् भवति दध्ना सं
सृष्टं दाधिकम्   **तरति**   लिङ्गात्तरती
त्यत्रार्थे इकण् भवति नावा तरति नाविकः उडुपेन
तरति औडुपिकः वेणुभारेण तरति वैणुभारिकः।
**इकण्चरत्यपि**   लिङ्गात्तेन चरती
त्यत्रार्थे इकण् भवति शकटेन चरति शाकटिकः

आश्विकः शौल्किकः चरतिजीवनेपिवर्त्तते वेतनेनच
रति वैतनिकः व्यावहारिकः व्यापारिकः सौहृ।
द्विरागमोनेष्यते स्वागतादीनांचेतिनस्वागतात्।
पण्यात् पण्यंविक्रेयमुच्यते पण्यवा।
चिनोलिङ्गात् तदस्यपण्यमित्यत्रार्थेइकण्भवति
लवणंपण्यमस्यलावणिकः गन्धःपण्यमस्यगा।
न्धिकः शिल्पात् लिङ्गात्तदस्यशिल्प।
मित्यत्रार्थेइकण्भवति मृदङ्गःशिल्पमस्यमार्दङ्गि
कः पाणविकः नियोगाच्च नियुज्य
तेयत्रसनियोगः नियोगवाचिनःशब्दात् तत्रनियु
क्तइत्यत्रार्थेइकण्भवति द्वारेनियुक्तःदौवारिकः।
द्वारादीनांचेतिवकारात्पूर्वऔकारागमः क्री
तादेः क्रीतादावर्थेलिङ्गात् इकण्भवति ते
नक्रीतम् षष्ट्याक्रीतंषाष्टिकम् सप्तत्याक्रीतंसा
प्ततिकम् आयुधात् तदस्यायुधमित्य
त्रार्थे इकण्भवति खड्गआयुधमस्य खाड्गिकः प्रा
सिकः नावस्तार्येविषाद्वध्येतुलया।
संमितेपिचतत्रसाधौयः नौशब्दात्तेन
तार्यमित्यत्रार्थे विषशब्दात् तेनवध्यइत्यत्रार्थे तु
लाशब्दात्तृतीयान्तात् संमितेचार्थेलिङ्गात्तत्रसाधु
रितिचार्थेचयप्रत्ययोभवति नावातार्येनाव्यम् विषे
णवध्यःविष्यः तुलयासंमितंतुल्यम् अपिशब्दा
त् वयस् शब्दात् तेनतुल्यइत्यत्रार्थेचयप्रत्ययोभा

वति वयस्मात्तत्स्वोवयस्यः कर्मणिसाधुः कर्मण्यः शा
रणेसाधुः शारण्यः **ईयस्तद्धिते** लिङ्गात्त
स्मैहितमित्यत्रार्थेईयप्रत्ययोभवति अश्वेभ्योहितम्
अश्वीयम् करभीयम् शरीरावयवाद्यः दन्तेभ्योहि
तं दन्त्यम् कर्ण्यम् कण्ठ्यम् **यद्गवादितः**

उवर्णान्ताल्लिङ्गात् गवादिभ्यश्चहितेर्थेयत्
भवति शङ्कुभ्योहितम् शङ्कव्यंदारु ❊ ❊
❊ ❊ परश्वेहितं परशव्यंशस्त्रम् वध
हितंवध्यंवासः गवादिभ्यः गोभ्योहितंगव्यं या
ग्यम् आग्रव्यम् यव्यम् मद्यम् हव्यम् बल
भ्यः येभ्यःशाहेभ्योहितेर्थेयप्रत्ययोदृश्यते गवा
दयः **उपमानेवतिः** उपमानवाचिनः
शब्दात् वतिप्रत्ययोभवति इकारउच्चारणार्थः वे
दमिवाधीते वेदवत् क्षत्रियइवक्षत्रियवत् मथुरा
यामिवमथुरावत् **तस्यभावे** भव
तोस्मादभिधानप्रत्ययावितिभावः येनहेतुनापदार्थे
शब्दस्तानेप्रवर्तते तस्मिन्नभिधेयेलिङ्गात्त्वतौ प्रत्य
यौभवतः सचजातिगुणक्रियाद्यभेदेनचतुर्धा।
गोःभावः गोता गोत्वम् शुक्लता शुक्लत्वम् पाचक
ता पाचकत्वम् डित्थता डित्थत्वम् **यणश्चप्र**
**कीर्तितः** भावेर्थेलिङ्गात् यणप्रत्ययःप्रकी
र्तितः पूर्वाचार्यैः वचाहात्तात्वाच वर्णादिभ्योदृढादि
भ्यश्चभावेर्थेयण् पूर्वाचार्यैःकृतः इत्यपिभवतीत्य।

र्थः शुक्लस्य भावः शौक्ल्यं कृष्णस्य भावः कार्ष्ण्यम् एवं
लौहित्यम् पौमर्यम् शुक्लस्य भावः शुक्लता शुक्लत्वम्
इत्यादि दृढादिभ्यश्च दृढस्य भावः दार्ढ्यम् सौहित्य
म् सौकर्यम् नैर्गुण्यम् नैस्व्यम् लालित्यम् औ
त्सुक्यमित्यादि    **तदस्यास्तीति मत्वाद्याः**
लिङ्गात्तदस्यास्तीत्यस्मिन्नर्थे मत्वादयः प्रत्यया भवन्ति
इति प्राहेऽर्थान्तरेऽपि मत्वादीनां प्रवृत्त्यर्थः तेन तद
स्मिन्नस्तीत्यस्मिन्नर्थेऽपि भवन्ति गावोऽस्य सन्ति गोमान्
देवदत्तः गावोऽस्मिन्सन्ति गोमान्देशः अग्निमान्विन्ध्यः
पर्वतो वा मकारान्तात् मकारोपधात् अवर्णान्ता
त् अवर्णोपधात् झयन्तात् विंशतितात् वन्तुरिश्च
ते यवादीन्वर्जयित्वा मकारान्तात् किंवान् शंवान्
इदंवान् मकारोपधात् शमीवान् शामीवान् अव
र्णान्तात् धनवान् मालावान् अवर्णोपधात् स्वग
एवान् सरस्वान् झयन्तात् विद्युत्वान् मरुत्वान् वि
द्वर्जितादिति वचनादिह न भवति सांप्यान् आशु
मान् यवादीनामपि वर्जितत्वान्मतुरेव यवमान्
ऊर्मिमान् असन्तान्मायामेधास्रग्भ्यश्च विन्नपि भ
वति यशस्वी तपस्वी मायावी मेधावी स्रग्वी
**आमयाद्दीर्घश्च**    आमयावी अत्र स्यपि प्र
त्ययो भवति यथास्वानित्यादि अकारान्तात् व्रीह्या
दिभ्यश्च इनिष्ठनौ दण्डी चक्री वज्री छत्री व्रीह्या
दिभ्यश्च व्रीहिकेदारः शिखा शिखी माया मा

यी दंष्ट्रा दंष्ट्री चोला चोली **हस्तदन्तकरा**
**ज्जातौ** हस्ती दन्ती करी अन्यत्र हस्तवानित्यादि
वर्णाद्ब्रह्मचारिणि वर्णी वर्णवानन्यः एवमन्योपि।
मन्त्राद्या अत्र स्मरणीयाः **संख्यायाः पूर**
**णे डमौ** पूर्यते येन स पूरणः पूरणार्थे संख्या
या डमौ प्रत्ययौ भवतः चतुर्णां पूरणः चतुर्थः एकाद
शानां पूरणः एकादशः अनेन डः अन्तस्थाडे थोरिति।
थकारागमः। ह्रस्वस्य दीर्घतेति एकशब्दस्य दीर्घः द्वा
दशः त्रयोदशः अष्टादशः द्व्यष्टनोः संख्यायामिति।
द्व्यष्टनोरात्वम् त्रेस्त्रयसिति त्रिशब्दस्य त्रयस् आदेशः
नान्तादमस्त्वादेर्मः पञ्चमः सप्तमः नवमः दशमः
**द्वेस्तीयः** द्विशब्दात्पूरणार्थे तीयप्रत्ययो
भवति द्वयोः पूरणो द्वितीयः **त्रेस्तृच** त्रि
शब्दात्पूरणार्थे तीयप्रत्ययो भवति त्रेस्तृ आदेशः तृ
तीयः **अन्तस्थाडे थौः** रेफषकारान्त
योः संख्ययोः डप्रत्यये परे थकारागमो भवति सर्वस
स्वरः चतुर्थः षण्णां पूरणः षष्ठः तवर्गस्य टवर्गाष्टु
वर्ग इति थस्य ठः **कतिपयात्कतेः** क
तिपयशब्दात् कतिशब्दाच्च परस्मिन्डप्रत्यये थका
रागमो भवति कतिपयानां पूरणः कतिपयथः क
तीनां पूरणः कतिथः **विंशत्यादेस्तम**
**ट्** विंशत्यादेर्गणात्पूरणार्थे तमट्प्रत्ययो भव
ति विंशतेः पूरणः विंशतितमः त्रिंशतः पूरणः त्रिं।

शत्तमः इकार ईप्रत्ययार्थः उत्तरत्र नित्यग्रहणादि
दं विकल्पः तेन पक्षे डोऽपि भवति विंशः त्रिंशः तेर्वि
शतेरपि इति तिशब्दस्यान्त्यस्वरादेर्लोपः विंशति
त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टि सप्तति अ
शीति नवतिः इति विंशत्यादिः **नित्यं**
**शतादेः** शतादेः संख्यायाः पूरणेऽर्थे नित्य
तमट्प्रत्ययो भवति उस्यवायः शतस्य पूरणः श
ततमः सहस्रतमः अयुततमः **षष्ट्यादेश्चा**
**तत्परात्** षष्ट्यादेः संख्याशब्दात् अतत्परा
त् पूरणेऽर्थे नित्यं तमट्प्रत्ययो भवति षष्टेः पूरणः
षष्टितमः सप्ततितमः अशीतितमः नवतितमः ।
संख्यापरात्तु विंशत्यादेस्तमडिति विकल्प एव एक
षष्टेः पूरणः एकषष्टः एकषष्टितमः द्वासप्ततः
द्वासप्ततितमः **विभक्तिसंज्ञा विज्ञेया**
**वक्ष्यन्ते नः परं तु ये अद्व्यादेः सर्वनाम्नश्च**
**किंबहोश्च पराः स्मृताः** अत एतस्मात्सू
त्रात्परमनन्तरं ये प्रत्यया वक्ष्यन्ते ते विभक्तिसंज्ञा
विज्ञेया विज्ञातव्याः तथा द्व्यादिगणवर्जितात् सर्व
नाम्नः किंबहुशब्दाभ्यां च पराः स्मृताः पूर्वाचार्यैः त
तः तत्र कुतः कुत्र बहुतः बहुत्र विभक्तित्वाद्दा
त्वम् **तेत्रदाधिः** तत्रतः तसादिषु
परेषु इदम् शब्दस्य इकारादेशो भवति इतः इह
अधुना इदानीम् **रथो रेतेत्** इदमः

रेफथकारयोः परयोः यथासंख्यं एत इत् इत्येता
वादेशौ भवतः अस्मिन्काले एतर्हि अनेन प्रकारेण इ
त्थम् **नेत्त्वेतदकारताम्** नेत्त्वेत
स्मादित्थपरे त्थप्रत्यये परे एतत् शब्दः अकारतां प्राप्नोति अकारः
संपद्यते इत्यर्थः अतः अत्र **पञ्चम्यास्तस्**
किंबहुद्याद्वाभ्यां त्यादिगणवर्जितात् सर्व
नाम्नः पञ्चम्यन्तेभ्यः तस्प्रत्ययो भवति कस्मात् कु
तः नहोः कुरिति कु आदेशः बहुभ्यः बहुतः सर्वतः
विश्वतः यतः ततः उभाभ्याम् उभयतः अमुतः उ
भयस्मात् एकतः अद्यादेरितिकिम् द्वाभ्याम् **त्र**
**सप्तम्याः** किंबहुसर्वनामभ्यः सप्तम्यन्तेभ्यः
त्रप्रत्ययो भवति कस्मिन् कुत्र बहुषु बहुत्र सर्व
त्र यत्र तत्र उभयत्र एकत्र अद्यादेरितिकिम् द्वयोः
त्वयि मयि भवति **इदमोहः** इदमः स
प्तम्यन्तात् हप्रत्ययो भवति अस्मिन् इह **कि**
**मः** किंशब्दात्सप्तम्यन्तात् हप्रत्ययो भवति कु
ह क्वान्तस्पदाद्यप्रयोगः **अत्क्व च** कि
मः सप्तम्यन्तात् अत्प्रत्ययो भवति किमस्तु कु आ
देशः नकारो वैचित्र्यार्थः कस्मिन् क **नहोः**
**कुः** किमः नकारहकारयोः परयोः कु आदे
शो भवति कुतः कुत्र कुह नहोरितिकिम् कस्मिन्का
ले कदा किं क इति कादेशः **कालेकिंसर्व**
**यदेकान्येभ्यएवदा** किम् सर्व यत् एक।

अन्यएभ्यः सप्तम्यन्तेभ्यः कालविषये दाप्रत्ययो भवति कस्मिन्काले कदा एवं सर्वदा यदा तदा एकदा अन्यदा काले इति किम् कस्मिन्देशे क्व सर्वत्र यत्र । तत्र एकत्र अन्यत्र **इदमो ह्यधुनादानीम्**

इदंशब्दात् सप्तम्यन्तात् कालविषये र्हि अधुना दानीम् इत्येते प्रत्यया भवन्ति अस्मिन्काले एतर्हि र्हिप्रत्यये परे एतत् इति इत्वं तस्य इवर्णस्य च लोपः इदानीम् काले इति किम् अस्मिन्देशे इह **दादानीं चैव तदः स्मृतौ** तदःशब्दात् सप्तम्यन्तात् दादानीमौ प्रत्ययौ स्मृतौ पूर्वाचार्यैः तस्मिन्काले तदा । तदानीम् किमश्च र्हिप्रत्ययोऽपीष्यते तस्मिन्काले तर्हि कर्हि काले इति किम् कुत्र तत्र **सद्यआद्या निपात्यन्ते** सद्यआद्याः शब्दा निपात्यन्ते साधवे नकथ्यन्ते सद्यः परुत् परारि ऐषमः परेद्यवि अद्य पूर्वेद्युः अन्येद्युः अपरेद्युः अन्यतरेद्युः इतरेद्युः अधरेद्युः उभयेद्युः उभयेद्युः एते सद्यआद्याः समाने अहनि सद्यः समानशब्दात् अहन्यर्थे सप्रत्ययो निपात्यते समानशब्दस्य च सभावः पूर्वपूर्वतरशब्दयोर्वर्षे यथासंख्यं उत् आरि प्रत्ययौ भवतः तयोश्च पर आदेशः पूर्वस्मिन्वर्षे परुत् पूर्वतरे परारि इदंश । अस्य वर्षेऽर्थे समस्प्रत्ययो निपात्यते इदमश्च ऐ आदेशः अस्मिन्वर्षे ऐषमः परशब्दइदंशब्दाभ्यां अहन्यर्थे एद्यविप्रत्ययौ निपात्येते इदमश्च अकारादेः ।

शः परस्मिन्परस्मिन्नहनि परेद्यवि अस्मिन्नहनि अ
द्य पूर्व अन्य अन्यतर इतर अपर अधर उभय उत्तरे
भ्यः अहन्येवार्थे एद्युस् निपात्यते पूर्वस्मिन्नहनि पू
र्वेद्युरित्यादिवाक्यम् **अस्तातादयश्च**
अस्तातादयः शब्दा निपात्यन्ते पूर्व अपर अवर शब्दे
भ्यः सप्तमी पञ्चमी प्रथमान्तेभ्यः दिशिदेशेकाले
ऽर्थे अस्तात् अस् प्रत्ययौ निपात्येते एवं क्रमेण पुर्
अध् अव् एते आदेशाश्च **पूर्वस्यां दिशि पू**
**र्वस्मिन्देशे पूर्वस्मिन्काले पुरस्तात्तिष्ठति**
पूर्वस्या दिशः पूर्वस्माद्देशात् पूर्वस्मात्कालात्
पुरस्तादागतः पूर्वा दिक् पूर्वो देशः पूर्वः कालः पुर
स्ताद्रमणीयम् एवमवस्तात्तिष्ठति अवस्तादागतः अवस्ताद्र
मणीयम् एवम् अधस्तात् अधः अधस्तात् अधः इत्यादि
ज्ञेयम् उत्तराधरदक्षिणेभ्यः सप्तमी प्रथमान्तेभ्यः
दिग्देशकालेष्वर्थेषु एनप्रत्ययो भवति **एन**
**बन्यतरस्यामदूरेऽपञ्चम्या इति** उत्तरस्यां
दिशि देशे काले उत्तरेण तिष्ठति उत्तरा दिक् देशः का
लो वा उत्तरेण रम्यम् एवम् अधरेण दक्षिणेन
**ऊर्ध्वशब्दात्सप्तमीपञ्चमीप्रथमान्तात्स्या**
**द्दिग्देशकालेष्वर्थेषु रिरिष्टातष्प्रत्ययौ त**
**स्मात्तयोर्निपातितौ** तस्य च उप आदेशः उपरि
उपरिष्टात् इति ऊर्ध्वायां दिशि देशे काले वा उपरि उ
परिष्टात् तिष्ठति एवं उपरि उपरिष्टादागतः उपरि

उपरिष्टाद्रम्यम् उपरि उपरिष्टाद्वस् उपरि उपरिष्टा
देहि इति द्वितीयाचतुर्थ्योरन्यत्रापि दृश्यते सोपसर्गा
दचरपूर्वाञ्च अन्चेः क्विबन्तात्सप्तम्याद्यन्तात्परस्य अ
स्तात् प्रत्ययस्य लुग्भवति अन्चेर्लुगिति पूर्वस्मादि
ति दिग्देशेकालेवा प्राक्तिष्ठति प्राक् आगतः प्राक् र
म्यं एवं प्रत्यक् उदक् अवाक् अधराक् इति प्र

**कारवचने था** प्रकारस्य वचने अभिधाने
सति सर्वनाम्नः थाप्रत्ययो भवति सर्वैः प्रकारैः स
र्वथा विश्वथा उभाभ्यां प्रकाराभ्याम् उभयथा यथा
तथा अन्यथा अपरथा इतरथा अन्येषां सर्वनाम्नां न
भवति अनभिधानात् संख्यायाः प्रकारवचने धाप्र
त्ययः **संख्याया विधार्थे धा इति** ए
कधा द्विधा त्रिधा चतुर्धा पञ्चधा षड्भिः प्रकारैः षो
ढा षड्ढा षष् शब्दात् धाप्रत्ययः पृषोदरादित्वा
दुत्वं वा उत्वम् पक्षे च ढत्वम् हशि षष्ठेति षस्य डः
तवर्गः षटे इति षस्य ढः द्वित्रिशब्दाभ्यां धाध्यमञौ।
च भवतः **द्वित्र्योश्च धमुञेधाच्चेति त**
**न्त्रान्तरात्** द्वेधा द्वैधम् त्रेधा त्रैधम् एक
शब्दात् धाप्रत्ययस्य ध्यमञादेशो भवति ए
**काद्धो ध्यमुञन्यतरस्यामिति** एकधा ऐक
ध्यम् **इदंकिंभ्यां थम् प्रकारे** इदंकिंभ्यां
प्रकारवचने सति थम् प्रत्ययः कार्यः उकार उच्चार
णार्थः अनेन प्रकारेण इत्थम् रथोरेतेत् इति इद।

मःइत् केनप्रकारेणकथम् किंकः इतिकिमःकः
इष्ठमन्नीयसुश्चवा    इत्याचन्द्रमसोरुदेत
स्तादयः प्रत्ययपर्यन्ताः आलिङ्गासङ्ख्यात्वादव्ययानि इत्युक्त
म्    आख्यातात्तमादयः    लिङ्गात् आ
ख्यातात्तमादयः प्रत्ययाभवन्ति तत्रबहूनांमध्यादे
कदेशस्यातिशये तमइष्ठइत्येतौप्रत्ययौभवतः अय
मेषामतिशयेनसूक्ष्मः सूक्ष्मतमः अयमेषामतिशयेन
पटुः पटिष्ठः इष्ठेयन्सोः कार्यंतवज्जावइष्यते तेना
न्त्यस्वरादिलोपः  यत्रद्वयोर्मध्यादेकस्यातिशयोविव
क्ष्यते तत्रतरईयन्सौभवतः अयमनयोरतिशयेनाढ्य
आढ्यतरः अयमनयोरतिशयेनपटुः पटीयान् इष्ठे
यन्सौगुणवाचिनएवभवतः    अजादीगुण
वाचिनएवेति    तेनअयमेषामतिशयेनपाचकः
पाचकतमः अयमेषामतिशयेनचलः चलतरः इ
त्यादौनभवतः अतिशायितानांमध्ये अप्यधिकातिशय
विवक्षायामिष्ठेयन्सन्तादपितरतमौभवतः पटिष्ठानां
मध्येतिशायितः पटिष्ठतमः एवंपटीयस्तमः पटीयस्त
रः विपर्ययोनभवत्यनभिधानात् इष्ठेयन्सावित्यादि
शब्दे तेनानेकाक्षरस्यान्त्यस्वरादिलोपः    स्थूला
दीनामन्तोरः स्थूलदूरादीनांपरस्यान्तस्था
देरवयवस्यान्तलोपःनामिनोगुणः प्रिय
स्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घ वृ
न्दारकाणांप्रस्थस्फवरबंहिगरवर्षित्रप् ।

द्राघिवृन्दादेशाश्च इष्ठेयन्सोरपि परयोर्भवन्ति     पटिष्ठः पटीयान् पक्षान्तरमप्यत्रान्त्यस्वरादिलोपोनास्ति अयमेषामतिशायेन प्रशस्यः श्रेष्ठः श्रेयान् लोकोपचारात्प्रशस्यशब्दस्यश्रज्यादेशौ भवतः प्रथिष्ठः प्रथीयान् म्रदिष्ठः म्रदीयान् भ्रशिष्ठः भ्रशीयान् क्रशिष्ठः क्रशीयान् द्रढिष्ठः द्रढी। यान् परिव्रढिष्ठः परिव्रढीयान् स्थूल स्थविष्ठः स्थवीयान् दूर दविष्ठः दवीयान् यविष्ठः यवीयान् ह्रसिष्ठः ह्रसीयान् क्षेपिष्ठः क्षेपीयान् क्षोदिष्ठः क्षोदीयान् प्रिय प्रेष्ठः प्रेयान् स्थिर स्थेष्ठः स्थेयान् स्फिर स्फेष्ठः स्फेयान् उरु वरिष्ठः वरीयान् बहुल बंहिष्ठः बंहीयान् गुरु गरिष्ठः गरीयान् वृद्ध वर्षिष्ठः वर्षीयान् तृप्र त्रपिष्ठः त्रपीयान् दीर्घ द्राघिष्ठः द्राघीयान् वृन्दारक वृन्दिष्ठः वृन्दीयान्     बहोर्लोपो भू च बहोः इष्ठस्य यिट् चेति     बहोः परयोरिष्ठेयन्सोरादिलोप इष्ठस्य यिकारागमश्च भूआदेशः भूयिष्ठः भूयान् प्रशस्यस्य श्र इति प्रशस्यशब्दस्य इष्ठेयन्सोः आदेशः श्रेष्ठः श्रेयान् अयमनयोरतिशायेन प्रशस्यः ज्येष्ठः ज्यायान् ज्य चेति     प्रशस्यशब्दस्य ज्य आदेशः     ज्यादादीयसः इति ईयस ईकारस्य आकारः वृद्धस्य चेति     वृद्धशब्दस्यापि     इष्ठेयन्सोः ज्यादेशः अयमेषा मतिशायेन वृद्धो ज्येष्ठः अयमेषामतिशायेन वृद्धो ज्यायान्

अन्तिकबाढयोर्नेदसाधौ अयमेषामति
शयेनान्तिको नेदिष्ठः नेदीयान् अयमेषामतिशये
न बाढः साधिष्ठः साधीयान् युवाल्पयोः क
नन्यतरस्याम् अयमेषामतिशयेन युवा
कनिष्ठः कनीयान् पक्षे यविष्ठः यवीयान् अयमे-
षामतिशयेनाल्पः कनिष्ठः कनीयान् कन्पस इति व
माश्रेव अयमेषामतिशयेनाल्पः अल्पिष्ठः अयम
नयोरतिशयेनाल्पः अल्पीयान् विन्मतोरि-
ष्ठेयसोर्लुक् इति अयमेषामतिशयेन त
पस्वी तपिष्ठः अयमनयोरतिशयेन तपस्वी तपीया-
न् अयमेषामतिशयेन स्रग्वी स्रजिष्ठः अयमनयो
रतिशयेन स्रग्वी स्रजीयान् तपस् शब्दस्य इति लि
ङ्गमिति अन्त्यस्वरादिलोपः स्रज्शब्दस्य नास्ति पकार
त्वात् अयमेषामतिशयेन गोमान् गविष्ठः अयम
नयोरतिशयेन गोमान् गवीयान् वत्वरपि मत्वरेव
तत्वात्त्वेमतोर्मकारस्य वकारकरणात् तेनातिशये
न धनवान् धनिष्ठः धनीयान् ओजस्वी ओजिष्ठः ओजी-
यान् आख्यातान्वल्पपि तत्र किंशब्दादेकारान्ताद्व्य
याद् आख्याताच्च तरतमाभ्यामामितौ भवतः यथा किंतरा
म् किंतमाम् पूर्वाह्णेतराम् पूर्वाह्णेतमाम् उच्चै
स्तरां पचति उच्चैस्तमाम् सततराम् नितराम् अनयोस्त
मोन भवत्यनभिधानात् आख्यातात् पचतितराम् प
चतितमाम् द्रव्यविशेषत्वात्तेन तरतमावेव भवतः ।

उच्चैस्तरोदेवदत्तः उच्चैस्तमोदेवदत्तः सामान्यविशेष
णेवयथा उच्चैस्तरांब्राह्मणम् उच्चैस्तमांब्राह्मणम् ब्र
ह्मणंजानातीत्यर्थः प्रशंसायामर्थेरूपम् इष्यते
प्रशंसायांरूपबिति पकारस्तन्त्रान्तरेस्वरार्थः प्र
शस्तःपटुः पटुरूपः पण्डितरूपः पचतिरूपम् कुत्सा
यांपाशप् इष्यते याप्येपाशबिति कुत्सितोविद्वान्।
विद्वत्पाशः मूर्खपाशः पचतिपाशम् **ईषद
समाप्तौगम्यमानायांकल्पप् देश्यदेशी
यरः** ईषदसमाप्तः पटुः पटुकल्पः पटुदेश्यः प
टुदेशीयः ईषदसमाप्तः गुडः गुडकल्पाद्राक्षा गुड
देश्या गुडदेशीया ईषदसमाप्तंपचति पचतिकल्प
म् पचतिदेश्यम् पचतिदेशीयम् **भूतपू
र्वेचरट्** टकारईप्रत्ययार्थः आढ्योभूतपूर्वः आ
ढ्यचरः आढ्यचरी असहायवाचिनएकशब्दात् का
आकिनौवा **एकादाकिनिश्चासहायेइ।
ति** एककः एकाकी तेनप्रख्यातइत्यत्रार्थे चञ्चुप्
चणपौ **तेनवित्तश्चञ्चुप्चणपाविति**
केशैःप्रख्यातः केशचञ्चुः केशचणः अक्षाच
ञ्चुः अक्षाचणः **तदस्यसञ्जातमित्यत्रा
र्थेतारकादिभ्यइतजिति** तारकाःसञ्जाता
अस्यतारकितंनभः सुखंसंजातमस्य सुखितः दुःखि
तः तारका सुख दुःख पुष्प स्तबक कुसुम कुड्मल
मुकुल अङ्कुर कोरक कन्दल पल्लव कण्टक किस

लय निद्रा तन्द्रा बुभुक्षा पिपासा उत्कण्ठा श्रद्धाभ्रभरो
गर्वीलवेगव्याधिव्रणगर्भ इत्यादयस्तारकादयः तदस्य
प्रमाणमित्यत्रार्थे द्वयसच् दघ्नच् मात्रच् एते प्रत्यया
भवन्ति **प्रमाणे द्वयसज्दघ्नञ्मात्रच इ**
**ति** ऊरुः प्रमाणमस्य ऊरुदघ्नं जलम् ऊरुद्वय
सम् ऊरुमात्रम् **पुरुषहस्तिभ्यामण्च**
पुरुषः प्रमाणमस्य पौरुषं जलम् एवं हा
स्तिनम् पुरुषद्वयसम् पुरुषदघ्नम् पुरुषमात्रम्
एवं हस्तिद्वयसमित्यादि **यत्तदेतेभ्यः परि**
**माणे वतुः** यत्परिमाणमस्य यावान् तावा
न् एतावान् दृग्दृशवतुष्वित्यात्वम् प्रमाणम
ङ्गुलहस्तादिप्रस्थादिमेयमाने परिमाणं तु यवतिलक
व्रीह्यादिमेयम् तेन प्रमाणपरिमाणभेदाद्यावन्मात्र
मित्यपि भवति दिष्टिहस्ते इति काश्मीरभाषया द्वादशा
ङ्गुलमानम् **अनवधारणे मात्रड्या**
**ने** छायामात्रमपि ग्राह्यं सर्पमुखान्नचन्दनात्
**इदंशब्दादियन्तुरिष्यते** इदंपरिमाणम
स्य इयान् इदमोत्र इकारादेश इष्यते इवर्णावर्णावि
तितस्य लोपः **किमश्चात्र डियन्तुरिष्यते**
किंपरिमाणमस्य कियान् डानुबन्धेन्यस्तादे
र्लोपः **द्वयसजादीनां स्त्रियामीकारः**
टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच् तयपितिनन्तान्
तात् नाभिद्वयसी नदी नाभिदघ्नी तस्मादत्रिमा।

त्रीस्त्रमभवति **एकवर्जितायाः संख्यायाः**
**सोसानवयवस्तत्राथेतयप्‌** **संख्याया अवयवेतयबिति** चत्वारस्त्रवयवायस्यतत्‌ च
तुष्टयम्‌ चतुष्टयमित्यत्र निर्द्धेदिरादिः षादयः
सितिविसर्जनीयस्यसः नस्यनामिकरेतिसस्यषः
तवर्गःषटेति षात्परस्यतस्यटः हियाटिड्डाणञितिईकारः चतुष्टयीघाह्मणाप्रवृत्तिः **द्वित्रिभ्यांतयस्यायज्वा** द्वितयं द्वयम्‌त्रितयम्‌ त्रयम्‌
द्वयी त्रयी आग्वदीकारः उभघाह्मणस्यतयपोनित्यमयजादेशः **उभादुदात्तोनित्यमिति**
उभाववयवौयस्यस उभयः उभयम्‌ उभयीगतिः सं
ख्यापरिमाणेर्थे किंशाब्दात्‌ इतिविधीयते **किं
मःसंख्यापरिमाणेइतिचेति** किंसंख्या
येषांते कतिब्राह्मणाः कतिवाह्मणाः कतिकुलानि
बह्वर्थादल्पार्थाच्चकारकाद्वाशस् **बह्वल्पा
र्थाच्छस्कारकादन्यतरस्यामिति** बहू
न्ददाति बहुशोददाति अल्पान्ददाति अल्पशोददा
ति एवं एकशोददाति आसिवह्वल्पार्थस्यातिवह्वीस्तो
काभ्यांत्रबह्वाधः वह्वीभ्योददाति बहुशोददाति कार
कत्वाभावादिदम्भवति बहूनांत्रः अल्पानांत्रः
अत्रसंबन्धषष्ठी संख्यावाचिनएकवचनान्ताद्वीप्सा
याम्‌ **संख्यैकवचनाद्वीप्सायामिति**
द्वौद्वौददाति द्विशोददाति पञ्चपञ्चभूत्वा प

त्वशः एकवचनान्तात् पादंपादं ददाति पादशो ददा
ति **अभूततद्भावे कृभ्वस्तीनां प्रयोगे
च्विः** अशुक्लं शुक्लं करोति शुक्लीकरोति अशु
क्लः शुक्लः संपद्यते शुक्लीभवति अशुक्लः शुक्लः ।
स्यात् शुक्लीस्यात् मालीकरोति मालीभवति माली
स्यात् चकारः अस्य च्वावित्यर्थः अस्य च्वाविति अवर्ण
स्य ईत्वम् अपटुः पटुर्भवति पटूभवति अनग्निमग्निं
करोति अग्नीकरोति च्वौ चेति दीर्घः अकर्तारं कर्ता
रं करोति कर्त्रीकरोति कर्त्रीस्यात् रीङृत इति रिआदे
शः कार्त्स्न्ये गम्यमाने सात्प्रत्ययः **विभाषा॥
सातिः कार्त्स्न्ये इति** सर्वं शस्त्रं वह्निः संप
द्यते वह्निसात् सर्वं द्रव्यं दधि संपन्नं दधिसात्
**तदधीनवचने धात्वर्थे** यदधीनं करोति अ
स्मात्करोति यमम् अव्ययस्य सकारस्य षत्वे प्राप्ते ।
सात्पदाद्योरिति षत्वाभावः **संख्यायाः क्रि
याभ्यावृत्तिगणने कृत्वसुच्** पञ्चवारान्
पञ्चकृत्वः **द्वित्रिचतुर्भ्यः सुच्** द्वौ वा
रौ द्विः त्रिः चतुः रात्सस्येति संयोगान्तलोपः एकस्य
सकृदादेशः **एकस्य सकृच्चेति** एकवा
रं भुङ्क्ते सकृद्भुङ्क्ते प्राग्वत्सलोपः नेयानमांशास् च्वि
कृत्वसुच् एतदन्तानि अलिङ्गसंख्यत्वादव्ययानीत्युक्त
म् एवमन्येपि तमादेर्लक्ष्यादनुसरणीयाः
**समासान्तगणानां वा राजादीनामदन्त ।**

ता समासान्तगतानांसमासस्योत्तरपदभूता
नांराजादीनांघाहानो अदन्ततावाभवति अकारःप्र
त्ययोवाभवतीत्यर्थः वाशब्दोव्यवस्थितविभाषायां
तेनक्वचिन्नव्ययः परेषांराजादीनांसमासान्तोनभव
ति तत्रराजाहःसखिभ्यस्तत्पुरुषेटच्प्रत्ययोभवति
राजाहःसखिभ्यष्टजिति चोलानांराजा चोलराजः
महांश्चासौराजा महाराजः पञ्चानांराज्ञांसमाहारः
पञ्चराजी कर्मधारयद्विगोस्तत्पुरुषाद्भावितित
त्पुरुषत्वात् द्विगोरितिईप्रत्ययः एवंपरमंचतदहः
परमाहः उत्तमाहः राज्ञाहाहःपुंसीतिपुंस्त्वम् मे
रोःसखा मेरुसखः व्यवस्थितविभाषात्वादिहनभ
वति स्वराजा अतिराजा अमलो किमःपरेषांराजा
दीनांनिन्दायांगम्यमानायांव्यवस्थितविभाषयेवन
भवति कुत्सितश्चासौराजा किंराजा सकिंसखायोमा
धुनपापान्नियोथिपंदितान्वयः संप्रगृहेनसकिंप्रभुः
गोपाहारयितस्तत्पुरुषपदच् गोरतद्धितलुकीति पु
मांश्चासौगौः पुङ्गवः वर्णेवर्गान्तः राज्ञोगौः राजग
वी पङ्गुखन्ध्यत्वादीकारः पञ्चगावोधनंयस्य पञ्च
गवधनः पञ्चानांगवांसमाहारः पञ्चगवम् तत्पु
रुषाद्भावितितत्पुरुषत्वम् पात्रादिभ्यादीप्रत्ययाभ
भावः पञ्चराजीतिवत्समासान्तेकृते अदन्तत्वाद्वि।
गोरितिईकारःस्यात् पञ्चभिर्गोभिः क्रीतःपञ्चगुः
रित्यत्रद्विगोर्लुगनपत्ये इतिठकणस्तद्धितस्यलुकिस

ति समासान्तो नास्ति अतद्धितलुकीति वचनात् भागव।
दिह न भवति स्वगौः अतिगौः नगौः अगौः न पूजना
दित्यत्र न भवति अदन्तता महाराजा यस्मिन्देशे स म
हाराजा प्रियः सखा यस्य स प्रियसखिः सख्युरप्रधान
स्य कार्यं न भवतीत्युक्तम् तेन सख्युश्चेति टच् न भव।
ति सख्युर्गोश्चविधौ ह्रिस्वाद्गुणीभूतेष्वपीतरे इति परि
गणनात् चित्रा गावो यस्य स चित्रगुः इहापि गोशब्द
स्याप्रधानत्वादेव गोरौहुटीति औकारो नास्ति लिङ्गवि।
शिष्टपरिभाषाया अनित्यत्वात् प्रातिपदिकग्रहणे
लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषा महती चा
सौ राज्ञी महाराज्ञी इत्यत्र समासान्तो न भवति

**ऋक्पूरब्धूःपथामकारः** अर्धर्चः अ
र्धर्चः अर्धर्चम् अर्धर्चाः पुंसि चेति चपाठेन नपुंसक
त्वं भवति तिसृणामृचां समाहारः त्र्यृचं सूक्तम् ऋ
चित्रः ऋलोपश्चेति त्रिपाठस्य संप्रसारणे ऋचः ऋका
रस्य च लोपः पञ्चर्चम् सप्तर्चम् **अन्तश्चोमा
णवे** अन्यत्र अन्तकसाम बहुचो वेदे अन्यत्र ब।
ह्वृक् सूक्तम् शेषाद्विभाषेति कप् राज्ञः पूः राजपु
री गौरादित्वादीकारः अरीषाहोऽन्तरपदमिति चेत् न
राजपुरीति माभूत् इति पूर्वग्रहणम् अप् द्विधागता आ
पो यत्र तद्द्वीपम् अन्तर्गता आपो यत्र तदन्तरीपम् सं
गता आपो यत्र तत्समीपम् प्रतिगता आपो यत्र तत्।
प्रतीपम् ह्यन्तरुपसर्गेभ्योऽप ईदिति अपोऽकारस्य ई।

संख्यादेः समाहारेइति त्रयाणामह्नां समाहारः त्र्यहः।
पञ्चाहः सप्ताहः रात्राह्नाहाः पुंसीति पुंस्त्वम् पुण्या
ह्नात्परस्याह्नः अह्नादेशो नास्ति पुण्यसुदिनाभ्या
मह्नइति अदन्तरूपस्य नपुंसकवचनात् पुण्यंचतदहः
पुण्याहम् सुदिनाहम्     **प्रत्यन्ववपूर्वा।**
**थ्योसामलोमभ्यामच्**     प्रत्यन्वव
पूर्वात्सामलोम्नोऽजिति प्रतिसामम् प्रतिलोमम् अ
नुलोमम् अवलोमम् अनुसामम् अवसामम् प्र
तिलोमाक्षी प्रतिसामाक्षी प्रतिलोमाक्षी अनुसा
माक्षी     **संख्यायानदीगोदावर्योः**
पञ्चनदम् पञ्चगोदावरम्   पद्मनाभोर्णनाभदी
र्घरात्रवर्षारात्रानिपात्यन्ते पद्मोनाभौयस्यस पद्म
नाभः ऊर्णानाभौयस्यसऊर्णनाभः दीर्घाचासौरा
त्रिः दीर्घरात्रः वर्षारात्रिरिववर्षारात्रः वर्षाकालइ
त्यर्थः     **अचतुरविचतुरसुचतुरत्रिच**
**तुरस्त्रीपुंसधेन्वनडुहृक्सामवाङ्मन**
**साक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्त**
**न्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयस**
**पुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजा**
**तोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः**
एतेऽजन्तसमासान्तानिपात्यन्ते अविद्यमानाश्चत्वारोय
स्यसअचतुरः विगताश्चत्वारोयस्मात्सविचतुरः शो
भनाश्चत्वारोयस्यससुचतुरः त्रयोवाचत्वारोवात्रिचा

तुरः स्त्री च पुमांश्च स्त्रीपुंसौ धेनुश्चानड्वांश्च धेन्वनडु-
हौ ऋक् साम च ऋक्सामे वाक् च मनश्च वाङ्मनसे
अक्षिणी भ्रुवौ च अक्षिभ्रुवम् प्राण्यङ्गानां समाहा-
रे द्वन्द्वः दाराश्च गावश्च दारगवम् ऊरू च अष्ठीव-
न्तौ च ऊर्वष्ठीवम् पादौ च अष्ठीवन्तौ च पदष्ठीवम्
प्राग्वत्समाहारे द्वन्द्वः निपातनात्पादशब्दस्य पद्
आदेशः अष्ठीवच्छब्दस्य अन्त्यस्य लोपः नक्तं च
दिवा च नक्तंदिवम् रात्रौ च दिवा च रात्रिंदिवम् अ-
ह्नि च दिवा च अहर्दिवम् सह रजसा वर्तते सरजा-
सम् निश्चितं श्रेयः निःश्रेयसम् पुरुषस्यायुः पुरु-
षायुषम् द्वयोरायुर्द्व्यायुषम् त्रयाणामायुः त्र्या-
युषम् ऋक् च यजुश्च ऋग्यजुषे
जातश्चासौ उक्षा जातोक्षः महांश्चासौ उक्षा महोक्षः
एवं वृद्धोक्षः शुनः समीपमुपशुनम् गोष्ठे श्वा गोष्ठ-
श्वः ब्रह्महस्तिपल्यराजभ्यो वर्चसः
ब्रह्मवर्चसम् हस्तिवर्चसम् पल्यवर्चसम् रा-
जवर्चसम् अवसमन्धेभ्यस्तमसः
अवतमसम् सन्तमसम् अन्धतमसम्
श्वसो वसीयःश्रेयसः श्वोवसीयम् श्वः-
श्रेयसम् अन्ववतप्ताद्रहसः अनु-
रहसम् अवरहसम् तप्तरहसम् उपस-
र्गादध्वनः प्रगतः अध्वा प्राध्वः प्रतिगतः अ-
ध्वा प्रत्यध्वः अयःसरसोर्जातिसंज्ञयोः कालायसम्

वज्रायसम् देवसरसम् विन्दुसरसम्   नावो
द्विगोः   पञ्चनावम् पञ्चनावप्रियः   अ
र्धाच्च   अर्धनावः अर्धनावम्   खार्या वा
अर्धखार्योः खार्यर्धः अर्धखारं अर्धचेत्यान्त
समकत्वम् पक्षे अर्धखारी   चवर्गदकारष
कारहकारान्ताद्द्वन्द्वात्समाहारे   वा
क्चम् श्रीस्रजम् वाग्दृषदम् वाक्त्विषम् छत्रो
पानहम् समाहारादन्यत्र वाक्त्वचः स्यात्प्रा
लट्षदः   अव्ययीभावे शरत्प्रभृति ।
भ्यः   शरदं शरदं प्रति प्रतिशरदम् अहनि
अहनि प्रति प्रत्यहम् अन्वहम्   गिरेश्च ।
सेनकस्य   सेनकग्रहणं विभाषार्थम् उ
पगिरम् अन्येषामाचार्याणां मते उपगिरि
बहुव्रीहौ संख्येये डजबहुगणात्   सं
ख्यानां समीपे ये ते उपदशाः उपविंशाः आसन्नद
शाः आसन्नविंशाः अदूरदशाः अदूरविंशाः अधि
कदशाः अधिकविंशाः द्वित्राः त्रिपञ्चाः पञ्चषाः
दशविंशाः संख्ययाव्ययासन्नादूराधिकसंख्याः संख्ये
ये इति बहुव्रीहिः   सक्थ्यक्ष्णोः स्वाङ्
अकारः स्वाङ्गवाच्यादीकारः गौरसक्थः एकाक्षः ।
दीर्घसक्थीत्यस्य सक्थ्नः कोटराक्षः सहस्राक्षः ।
अतिनञ्सुदुर्भ्यो वापीष्यते   सस
क्थः स्वक्षः अतिसक्थः अत्यक्षः असक्थः अनक्षः

अतिमाथिने अतिरणीयस्येति वाक्यम् द्वित्रि
भ्यां मूर्ध्नः द्विमूर्धः त्रिमूर्धः नेतोत्तरपदा
द्बहुलम् सोमो नेता येषां ते सोमनेत्राः देवाः अर्थ
मनेत्राः प्रायेणामृगदिरणीनेत्राः कन्याद्वैदिकुहस्थि
नः नेतानेन्दप्राहः प्रथमाविभक्त्येकवचनम् प्र
थमान्तउत्तरपदं यस्य सतस्मात् इतिक्रमारसंभवे
मृगदिरणीनेत्री येषां ते मृगदिरणीनेत्राः बहुलमितिवच
नाम्रहनेनाशेषि अञ्नासिकायाः सं
ज्ञायां नसं चास्थूलात् मद्रानसः कु
म्भीनसः गोनसः इदनभवति स्थूलनासिकः ।
असंज्ञत्वात् गोस्त्रियोरुपसर्जनस्येति ह्रस्वः सं
ज्ञायामिति किम् तुङ्गनासिकः सुप्रात
सुश्वसुदिवशारिकुक्षचतुरश्रैणीप ।
दाजपदप्रोष्ठपदा निपात्यन्ते शो
भनं प्रातः सुप्रातम् शोभनं श्वः सुश्वम् शोभने ।
दिवा सुदिवम् शारिवत्कुक्षिर्यस्य शारिकुक्षः च
तस्रः अश्रयो यस्य स चतुरश्रः अन्ये
ष्वपि दृश्यते अञ्ञः करालाणि
द्विरात्रज्ञाः षडङ्गमातुलेन्यसेत् पत्तास्वपादौ
यस्य सपत्नीपदः निपातनात्पद् अजस्येवपादौ
यस्य सः अजपदः प्रोष्ठौ पादौ येषां ते प्रोष्ठपदाः भा
द्रपदा अपि नित्यमसिच्प्रजामेधयोः
नञ् दुस्सुभ्यः पराभ्याः प्रजाः दुष्प्रजाः सु

प्रज्ञाः अमेधाः दुर्मेधाः स्वमेधाः अल्पमेधाः अपि स्यात् आ
वैनद्धि विद्वीनस्य प्रकृष्टस्यान्त्यमेधस्येति धर्मादपि निच्केवला
त् सन्नद्धधर्मा धनदः **इच्कर्मव्यतिहारे** दण्डैश्च दण्डै
श्च प्रहृत्य प्रवृत्तं दण्डादण्डि **द्विदण्ड्यादिभ्यश्च** द्वौ दण्डौ यस्मिन्प्रहरणे तद्द्विद
ण्डि उभादन्ति उभाञ्जलि निपातनादुभयथाप्यस्य।
वृत्तावपि प्रयोगः उभयादन्ति उभयाञ्जलि
**अक्षेभ्यो जातवेदोऽक्षुः** अक्षुः अक्षौ जातवेदः
संज्ञः संदृतजातवेदः पञ्चभोऽन्तस्मान् अवतनय।
न्वा पिनाकधन्वा वासंज्ञायाम् प्रख्यधन्वा प्रख्य
त्रुः असंज्ञायामपि विकल्पो दृश्यते राजधन्वा धिन
वधन्वेत्येव गाण्डीवधन्वा श्याकर्णकृष्णधन्व वक्र
स्वमानुधन्वेति धन्वनाम धन्वनाजित्तयमधन्वः
शार्ङ्गरथकरणं कृणोत इत्यादि **उङ्वन्ये**
**अस्वरादेर्लोपः** उङ्वन्ये प्रत्यये परे अ
स्वरादे रवरूवस्य लोपो भवति एकादशाः सं
ख्यायाः हरतेऽडमो इति डः सरसिजातं सरसिजम्
सप्तमी पञ्चम्यन्ते जनेर्डः **नेर्विशातेरपि**
विशातिशब्दोऽयः तिशब्दः तस्य लोपो भवति।
अपिशब्दात् स्वान्मूर्वस्यान्त्यस्वरादेरपि लोपः वि
शतेः पूरणः विंशः **इवर्णावर्णौ स्वरे यो**
**प्रत्यये च** इवर्णावर्णयोः स्वरे प्रत्यये परे
ये प्रत्यये च परे लोपो भवति अत्रेरपत्यं आत्रेयः न
पात्रपत्येनादेवः यकारे सङ्कृतेरपत्यं साङ्कृत्यः।

गार्ग्यः तत्त्वः नस्य तत्क्वचित् नकारस्य
लोपो भवति स्वरादौ यकारादौ च प्रत्यये परे महा-
त्मनो राजा महाराजः राज्ञो भावः कर्म वा राज्यम् ।
त्रयाणामह्नां समाहारः त्र्यहः क्वचिदिति वचनादि-
ह न भवति दाण्डिनां समूहो दाण्डिनम् उव-
र्णस्त्वोत्वमापाद्यः उवर्णो ओत्वमापादनी-
यः स्वरादौ यकारादौ च प्रत्यये परे भृगोरपत्यं भा-
र्गवः कद्र्वाः अपत्यं काद्रवेयः बभ्रोरपत्यं बाभ्रव्यः
वधूभ्यो हितं वधव्यं वासः य्येकद्र्वास्त्वा
लुप्यते उवर्णः यप्रत्यये परे लुप्यते अक-
द्र्वाः कद्रूशब्दं वर्जयित्वा मद्र्वोरपत्यं माद्राद्-
यः जम्ब्वा अपत्यं जाम्बेयः अकद्र्वा इति किम् का-
द्रवेयः कार्यावश्यावावादेशावौकारौ-
कारयोरपि ओकारौकारयोः यथासंख्यमा-
व् आव् आदेशौ कर्तव्यौ स्वरादौ यकारादौ च प्रत्य-
ये परे गोभ्यो हितं गव्यम् नावा तार्यं नाव्यम्
वृद्धिरादौ सणे णकारानुबन्धे प्रत्यये परे ।
आदेः स्वरस्य वृद्धिर्भवति वासिष्ठः गार्ग्यः नाडाय-
नः शौक्लम् न य्वः पदाद्योर्वृद्धिरागा-
मः पदाद्याभ्यां यकारवकाराभ्यां परस्य स्वर-
स्य वृद्धिर्न भवति यकारवकारयोस्तु वृद्धिरागमो भ-
वति सा च तयोः पूर्वमेव भवति विगतान्यङ्गानि यस्य
स व्यङ्गः व्यङ्गस्यापत्यं वैयङ्गिः शोभना अश्वा यस्य स

स्वस्रः स्वसुरपत्यं स्वास्रीयः व्याकरणं वेत्त्यधीते वा वैयाकरणः वैयाकरणः इति लघुहैमोनामप्रकरणे तद्धितपादः षष्ठः ६

**स्त्रियाम्** अधिकारोऽयम् यानित ऊर्ध्वं प्रत्ययान् क्रमिष्यामः ते स्त्रियां वर्त्तमानाल्लिङ्गात्परे वेदितव्याः आ पादपरिसमाप्तेरयमधिकारः

**अजाद्यदन्तादाप्** अजादेर्गणात् अकारान्ताच्च लिङ्गात् स्त्रियां वर्त्तमानात् आप्प्रत्ययो भवति पकारः स्वरार्थः अजा एडका चटका अश्वा त्रिफला दंष्ट्रा क्रुञ्चा उष्णिहा बाला वत्सा कन्या ज्येष्ठा कनिष्ठा मध्यमा कोकिला अदन्तात् कथ्य कथा भिदा छिदा त्रपा देवदत्ता

**ऋन्नेभ्यस्त्री** ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियामीप्रत्ययो भवति कर्त्री हर्त्री दण्डिनी पद्मिनी

**वनो रश्च** वनन्ताल्लिङ्गात् स्त्रियामीप्रत्ययो भवति रेफश्चान्तादेशः पीवन् पीवरी धीवन् धीवरी

**न संख्यायाः** संख्याया ऋन्नेभ्य इति स्त्रियामीप्रत्ययो न भवति तिस्रः चतस्रः पञ्च सप्त लोपे कृते आपुन भवति नलोपस्यासिद्धत्वात् न स्वस्रादिभ्यो न भवति स्वसा माता स्वसृ तिसृ चतसृ ननान्दा दुहिता तथा याता मातेति सप्तैते स्वस्रादय उदाहृताः

**मनः** मन्नन्ताल्लिङ्गात् स्त्रियामीप्रत्ययो न भवति दामा दामानौ सीमा सीमानौ

**अनो बहुव्रीहेः** अनन्ताद्बहुव्रीहेः स्त्रियामी

प्रत्ययोनभवति सुपर्वा स्त्री सुपर्वाणौ सुशर्मा सुशर्मा-
णौ **मनोस्तुडा** मनोर्मनन्तस्यलिङ्गस्य अन-
न्तस्यचबहुव्रीहेः स्त्रियांडाप्रत्ययोभवति दामा दामे।
दामाः सीमा सीमे सीमाः सुशर्मा सुशर्मे सुशर्माः

**उदृकारानुबन्धान्ती** उकारानुबन्धा-
प्रत्ययान्तात् ऋकारानुबन्धप्रत्ययान्तात्स्त्रियामीप्र-
त्ययोभवति गोमती धनवती विदुषी पेचुषी भवती
अभिभवती पचन्ती दीव्यन्ती **पादोवा** पा-
दन्तात् स्त्रियामीप्रत्ययोभवति विकल्पेन द्विपदी
द्विपात् **अनुपसर्जनात्** अधिकारोयम्
इत ऊर्ध्वंप्रत्ययाननुक्रमिष्यामः अनुपसर्जना-
त्प्रधानादेवतेभवन्तीतिवेदितव्यम् बहवोब्राह्मणाय-
स्यांसाबहुब्राह्मणानगरी अत्रपुनस्त्विति अप्रधाना-
द्ब्रवन् ब्राह्मणान्नभवतीतिअन्वयः **नारी** अयो-
याहोनिपात्यते नृनरशब्दस्य ईप्रत्ययेपरेवृद्धिर्निपा-
त्यते नारी **यूनस्तिः** युवन्शब्दात् तिप्रत्य-
योभवति युवतिः ऋन्नेभ्यस्त्रीतिईकारःप्राप्तः नस्य
तद्धिते इतिनलोपः **अणेयेकात्** अ-
णन्तात् एयन्तात् इकणन्ताच्चलिङ्गात् ईप्रत्य-
योभवति वासिष्ठी कुम्भकारी कर्मणपरा आन्वेयी
आह्निकी अनुपसर्जनादित्येव बहुवासिष्ठा अति-
कुम्भकारा **ण्यात्** ण्यप्रत्ययान्तात् स्त्री-
यामीप्रत्ययोभवति गार्गी यस्यापत्यस्येतियलोपः अ

उपसर्जनादित्येव प्रियगार्ग्यो **आवामायनचा
गमः** यञन्तात् स्त्रियामीप्रत्यये परे आयनच् आगा
मो भवति आवामिति वचनाद्विकल्पेन गार्ग्यायणी
गार्गी वात्स्यायनी वात्सी यस्यापत्यस्येति यलोपः
**कौरव्यासुरिमाण्डूकात्** कौरव्यासुरिमा
ण्डूकशब्देभ्यः ईप्रत्यये परे आयनच् आगमो भवति।
कौरव्यायणी आसुरायणी माण्डूकायनी **लो
हितादिकतन्तेनः** लोहितादिभ्यः शब्देभ्यः क
तपर्यन्तेभ्यः ईप्रत्यये परे आयनच् आगमो भवति लो
हितस्यापत्यं स्त्री लौहित्यायनी कत कात्यायिनी
**आवट्याद्वाप्** आवट्यशब्दात् आप् भवति अव
टस्यापत्यं स्त्री आवट्या **वनाद्धेच** वासमरू
शब्दस्य ईप्रत्यये वनदादेशश्च निपात्यते वनदस्या
पत्यं स्त्री वनदी **वयसि प्रथमे** प्रथमे वय
सि वर्तमानात् शब्दात् स्त्रियामीप्रत्ययो भवति कुमा
री किशोरी वधूटी चिरण्टी **द्विगोः** अदन्ता
त्परपदात् द्विगोः स्त्रियामीप्रत्ययो भवति पञ्चपाल
ी दशग्रामी समाहारे द्विगोरयं विधिः **षडो
त्रवन्यात्वी** षकारान्तवन्प्रत्ययान्तात् ठा
कारान्तवन्प्रत्ययान्ताच्च स्त्रियामीप्रत्ययो भवति न
र्तकी खनकी रजती गात्रविलेपे खनुश्च धारते न
र्तने शिल्पमस्याः खनने शिल्पमस्या इति शिल्पिनि
षु षकाराद्यर्थः प्रवृत्तमनाकान्ताइत्यकादेशः।

नामिनश्चोपधायाइतिणत्वं: अनेनईकारः टकारानुब न्धात् कुरुचरी मद्रचरी चरतेष्टः कुरुषुचरति । मद्रेषुचरति चरेष्टः टकारइत्यर्थः अनेनईकारः

**गौरादेः** गौरादेर्गणात्स्त्रियामीप्रत्ययो भवति गौरी मत्सी मत्स्यस्य यो ङ्यामिति यलोपः नादी मही नर्तकी **बहुव्रीहेरूधसोनञ्** ऊधस् शब्दान्तात् बहुव्रीहेः ईप्रत्ययोभवति नकारश्चान्तादेशः कुण्डमिवऊधोयस्याः साकुण्डोध्नी एवं घटोध्नी सकारस्यनकारेकृते अवमसंयोगादित्य कारलोपः बहुव्रीहीतिकिम् प्राप्ताऊधःप्राप्तोधाः त त्पुरुषोयम् अत्वसन्तेतिदीर्घः **वासंयोगोपधान्ताङ्गात्** यन्ताङ्गसंयोगोपधस्योप धायांसंयोगोनास्तितस्मात् ईप्रत्ययोवाभवति च न्द्रवन्मुखंयस्याःसाचन्द्रमुखी चन्द्रमुखा सुकेशी सुके शा चारुस्तनी चारुस्तना असंयोगोपधादितिकिम् बहुयत्ना **अनश्चाल्लोपिनः** अन न्ताद्बहुव्रीहेरल्लोपिनः यस्याःअसंयोगादित्यका रलोपोस्तितस्मात्ततोबाह्यान्तान्स्त्रियामीप्रत्ययोवा भवति अनश्चबहुव्रीहेः नयोस्तुडा इतिनिषेधउभय योर्मिलितयोःप्राप्तौ पक्षेतावपिभवतः बहवोराजानोय स्याःसाबहुराज्ञी बहुराज्ञौ बहुराज्ञ्यः बहुराजा बहुरा जानौ बहुराजानः बहुराजा बहुराजे बहुराजाः द्वि नाम्नी द्विनाम्न्यौ द्विनाम्न्यः द्विनामा द्विनामानौ द्वि

नामानः द्विनामा द्विनाम्ने द्विनामानः कर्णान्तात् लम्ब
कर्णी लम्बकर्णा अङ्गोपसर्ज्जनात्किम् सुपर्वी सुपा
र्वाणौ सुपर्वाणः सुपर्वा सुपर्वे सुपर्वाः **ना**
**सिकोदरकर्णाङ्गजङ्घादन्तोष्ठशृङ्गतः**
नासिक उदर कर्ण अङ्ग ज ङ्घा दन्त ओष्ठ शृङ्ग इत्येत
द्भ्यां स्वाङ्गात् स्त्रियामीप्रत्ययोभवति तुङ्गनासिकी
तुङ्गनासिका तनूदरी तनूदरा कम्बुकर्णी कम्बु
कर्णा स्वल्पाङ्गी स्वल्पाङ्गा स्थूलजङ्घी स्थूलजङ्घा सि
तदन्ती सितदन्ता बिम्बोष्ठी बिम्बोष्ठा तीक्ष्णशृङ्गी ।
तीक्ष्णशृङ्गा **सविद्यमाननञ्पूर्वात्**
सविद्यमाननञ् एतत्पूर्वात्स्वाङ्गादीप्रत्ययोनभवा
ति सहकेशेनवर्त्तते सकेशा विद्यमानकेशा नवि
द्यन्ते केशायस्याःसा अकेशा एवंसनासिका विद्य
मानकेशा अकटाइत्यादि **नक्रोडादिबह्व**
**च्चरात्** क्रोडादयन्तात् बह्वचरात्स्वाङ्गात्स्त्रियामीप्र
त्ययोनभवति रम्यक्रोडा शोभनखुरा चन्द्रभाषा बहुस्वरा
न् पृथुजघना शशिवदना **अन्तर्वत्नीगर्भि**
**ण्याम्** अन्तर्वत्न शब्दात् गर्भिण्यांस्त्रियांईप्रत्यये
परेनुगागमोभवति अन्तर्वत्नी गर्भिणी गर्भिण्यामिति
किम् अन्तर्विद्यतेऽस्यां शालायाम् अन्तर्वती शाला
**पतिवत्नीवभर्तरि** पतिवत्शब्दात् जीवभर्तृ
कायांस्त्रियांवर्त्तमानात् ईप्रत्ययेपरेनुगागमोभवति प
तिवत्नीदेवदत्ता जीवभर्त्तरीतिकिम् पतिमतीमथुरा

**पत्युर्नश्च** पतिशब्दात्स्त्रियामीप्रत्ययो भवति नकारश्चान्तादेशः पत्नी ब्राह्मणक्षत्रियवैश्यशूद्रभार्योच्यते अन्यत्र ग्रामस्य पतिरियं स्त्री **समानादेः** समानादेर्गणात्परस्य पतिशब्दस्य ईप्रत्ययो भवति अन्त्यस्य च नकारादेशः समानः पतिर्यस्याः सा सपत्नी इह पाठादेव समानस्य स इति योगविभागात्समानस्य सभावः समानश्चान्त्वीर एकपुत्रदास इति समानादिगणः **वान्यपूर्वोपसर्जनात्** समानादेर्गणादन्यः शब्दः पूर्वो यस्मात् अप्रधानात् ईप्रत्ययो नकारश्चान्तादेशो वा भवति वृद्धः पतिर्यस्याः सा वृद्धपत्नी वृद्धपतिर्वा एवं स्थूलपत्नी स्थूलपतिर्वा उपसर्जनादिति किम् ग्रामस्य पतिरियम् **कामुकान्मैथुनेच्छायाम्** कामुकशब्दात् मैथुनेच्छायां गम्यमानायां स्त्रियामीप्रत्ययो भवति कामुकी रन्तुमिच्छन्ती अन्यत्र कामुका यत्किमपि वाञ्छन्ती **नागात्स्थौल्ये** नागशब्दात्स्थौल्ये गम्यमाने स्त्रियामीप्रत्ययो भवति नागी स्थूलोच्यते स्थौल्ये इति किम् नागा **अकृते स्थलात्** स्थलशब्दादीप्रत्ययो भवति अकृते गम्यमाने वनस्थली अकृते इति किम् स्थला या देवनार्थं नार्थे क्रियते सोच्यते **गोणादावपने** गोणशब्दादावपनेऽर्थे ईप्रत्ययो भवति गोणी **पित्तादन्ने** पित्तशब्दादन्नेऽर्थे ईप्रत्ययो

भवति पिण्डी अन्नेइतिकिम् पिण्डा    अमन्त्रेत्रा।
कुण्डतः    कुण्डतः कुण्डशब्दात् ईप्रत्ययो भवा
ति अमन्त्रेऽर्थे अमन्त्रंपात्रम् कुण्डी अमन्त्रे इतिकिम् कु
ण्डा    घटाच्छिल्पिकृते    घटशब्दात् ईप्रत्या
योभवति शिल्पी कुम्भकारादिः तेनकृते भाण्डे
घटी    शिल्पिकृते इतिकिम् कटिघटा    कु
म्भात्    कुम्भशब्दात् शिल्पिकृतेऽर्थे स्त्रियामीप्र
त्ययोभवति कुम्भी    असितादेश्चवर्णातः
वर्णतोवर्णवाचिनोलिङ्गात् असितादेः सितादि
वर्जितात् स्त्रियामीप्रत्ययोभवति श्यावली कल्माषी
पिशङ्गी असितादेरितिकिम् सिता शुक्ला पीता श्वे
ता सितशुक्लपीतकृष्णश्यामकपिलरक्तधवलधूस
रपिशङ्गपिङ्गलकडारकर्बुरधूम्रइत्यादिः सितादिः
तोपधात्तोनकारश्चवा    तकारोपधाद्वर्ण
वाचिनः स्त्रियामीप्रत्ययोवाभवति ईकारपरतेनकारस्य
नकारश्चवा एनीएता हरिणीहरिता रोहिणीरोहिता
वर्णइतिकिम् प्रकृता तोपधादितिकिम् श्यामा
उदन्ताद्गुणवाचिनः    गुणवाचिनः विशेषण।
प्रतिपादकात् उवर्णान्ताल्लिङ्गात् स्त्रियामीप्रत्ययोवा
भवति पट्वी पटुः मृद्वी मृदुः उदन्तादितिकिम् शाख
रियम्    बह्वादिभ्यः    बह्वित्यादिशब्देभ्यः
स्त्रियामीप्रत्ययोवाभवति बह्वी बहुः कल्याणी क
ल्याणा बहु उद्धार कल्याणप्रवाण कृपाण विशाल

इतिवद्भ्वादयः   **भुवो नित्यम्**   भूशब्दान्नित्यं स्त्रि-
याम् ईप्रत्ययो नित्यं भवति विभ्वी प्रभ्वी भूशब्दग्रह-
णं किम् स्वयम्भूरियम्   **सख्यशिश्वोश्च**
सखिअशिशुशब्दाभ्यां स्त्रियाम् ईप्रत्ययो भवति
सखी न विद्यते शिशुर्यस्याः सा अशिश्वी   **पुंयो-
गात्तेन चेदाख्या**   पुंयोगात्सम्बन्धाद्धे-
तोः यः शब्दः स्त्रियां वर्तते तस्मादीप्रत्ययो भवति तेन
चेदाख्या तेन शब्देन यदि पुंसः आख्या अभिधानं भवति।
गणकस्य स्त्री गणकी पालितस्य स्त्री पालिती पुंयोगा-
दितिकिम् देवदत्ता तेन चेदाख्या इतिकिम् प्रसूता
**क्रीतात्करणपूर्वतः**   करणं पूर्वं यस्मा-
त्क्रीतशब्दात् तस्मादीप्रत्ययो भवति वस्त्रेण क्रीता
वस्त्रक्रीती धनक्रीती करणपूर्वादितिकिम् स्वयं।
क्रीता स्वयंक्रीता   **पूतक्रतुमनोरैश्च**
पूतक्रतुशब्दात् मनुशब्दाच्च स्त्रियां ईप्रत्ययो भवति अ-
न्त्यस्य चैकारादेशः पुंयोगे गम्यमाने पूतक्रतोः स्त्री पू-
तक्रतायी मनोः स्त्री मनायी पुंयोगे इतिकिम् पूतः क्रतु-
र्यया सा पूतक्रतुरियम् मनुरियम्   **कु-
सिताग्निवृषाकपेः**   ॥   कुसिता-
ग्निवृषाकपिशब्देभ्यः स्त्रियां ईप्रत्ययो भवति ऐकार
श्चान्तादेशः पुंयोगे गम्यमाने कुसितस्त्री कुसितायी
अग्नेः स्त्री अग्नायी वृषाकपायी वृषाकपाय्यम्भि कुसित।
कुसिदादाभ्रदाता इतिसूत्रकारः श्रीपाणिनिः   ३

दितःश्वश्रो वाब्रह्मसूतभोजोग्रराजतः ब्र
ह्मणत् सूतभोजउग्रराजन् इत्येतेभ्यःपरस्मात् उदित
शब्दात् वाईप्रत्ययोभवति उदितशब्दस्यचपक्षेश्वश्रादे
शः ब्रह्मश्वश्री ब्रह्मउदिता सूतश्वश्री सूतउदिता भोज
श्वश्री भोजउदिता उग्रश्वश्री उग्रउदिता राजश्वश्री राजउ
दिता जातेरयोपधादहीनः जातिवा
चियल्लिङ्गं यकारोपधंस्त्रियामेवयन्नवर्तते तस्मा
दीप्रत्ययोभवति कुक्कुटी मयूरी ब्राह्मणी चण्डाली
नाडायनी कठी जातेरितिकिम् पाचिका अयोपधा
दितिकिम् क्षत्रिया अहीनइतिकिम् बलाका
पाकाद्यन्तात्लघ्वच जातिवाचियल्लिङ्गं
पाकाद्यन्तंतस्माद्दीप्रत्ययोभवति ओदनपाकी श
ङ्कुकर्णी मालपर्णी शङ्खपुष्पी औषधिजातिविषयम्
पाककर्ण पर्णपुष्पफलमूल इतिपाकादयः
इणतः इणप्रत्ययान्ताद्दीप्रत्ययोभवति दक्षमा
पंक्ष्मीदाक्षीप्लाक्षी मनुष्यजातेरेः
मनुष्यजातिवाचिनः ॥ इकारान्तात्लिङ्गात् ॥ ईप्र
त्ययोभवति ॥ ॥ अवन्ती कुन्ती मनुष्यजाते
रितिकिम् तित्तिरिः ऊङुतः उकारान्ता
न्मनुष्यजातिवाचिनो लिङ्गात् ऊङ्प्रत्ययोभवति ङ
कारःश्ववद्भावितप्रकरणानूङ्प्रत्ययार्थः कुरूः ब्रह्मबन्धूः
पङ्गुकद्रुतः पङ्गुकद्रुशब्दाभ्यांस्त्रियां
ऊङ्भवति पङ्गूः कद्रूः सफलत्वाणवा

मादेश्चः    सफलक्ष्मणावाम इत्येतदादेः ऊरु
शब्दादूङ्भवति सफोरूः लक्ष्मणोरूः वामोरूः
औपम्ये संहितात्    औपम्येन उपमायां संहिता
त् संयुक्तात् ऊरुशब्दान्तात्स्त्रियामूङ्भवति करभ
इव ऊरू यस्याः साकरभोरूः कदलीस्तम्भोरूः म
णिबन्धादकनिष्ठकरस्यकरभोबहिः    बाह्व
न्तात्संज्ञायाम्    बाहुशब्दान्तात् स्त्रियां
ऊङ्भवति संज्ञायां विषये मद्रबाहूः भद्रबाहूः सं
ज्ञायामिति किम् वृत्तबाहुः स्त्रियम् वलोपः श्वशुरस्य च
उश्च अश्च तौ वयोर्लोपः श्वशुरशब्दात् ऊङ्प्रत्ययो
भवति अन्त्यस्य अकारस्य उकारस्य च लोपो भवति श्व
शुरस्य श्वश्रूः    इति लघुवृत्तौ नाम
प्रकरणे स्त्रीप्रत्ययपादः समाप्तः ७ समा
प्तेयं समासम् ॥ सन्धिनामसमासाश्च
तद्धितस्त्रीप्रत्ययमिति ॥ शुभमस्तु ॐ